# संस्कृतशब्दवादः





रामदीनशुक्लः।

# संस्कृतशब्दवादः

विद्वद्वर्यश्रीरामदीनशुक्लप्रणीतः।

सोऽयम्

तत्प्रपौत्रमहामहोपदेशक वाणीभूषण
श्रीनन्दकिशोर शुक्लेन प्रकाशितः



प्रथम संस्करणम् ] संवत् १९८४ [ मूल्यमाणकचतुष्टयम्

प्रिन्टर—लाला रामनारायण, मरचेंट प्रेस, कानपुर।

## श्री पं० विश्वम्भरनाथजी शुक्ल



सुविमलमतिरतिसदयः सकलकलाकलितो विवेककुशलः।
श्रीविश्वम्भरनाथः शुक्लः शुक्लयशोऽनिशं लभताम् ॥

मरचेंट प्रेस, कानपुर।

# धन्यवादः ।



सुरभारतीसमर्चनाय तत्प्रचाराय च प्रणीतोऽयं संस्कृत-शब्दवादनामा ग्रंथो, रायबरेलीप्रान्तान्तर्गत रायपुर-मँझिगवाँ ग्रामनिवासिना स्वनामधन्यश्रीदेवताप्रसाद-शुक्लतनूजेन, संस्कृतविद्यानुरागिणा कान्यकुब्जवंशावतंस श्रीविश्वम्भरनाथशुक्लेन विद्वज्जनोपकाराय निजव्ययेन प्राकाश्यमनायि । तदिदमत्युपकारि कर्तव्यमिति मत्वा तद्वि-निमयभूतः सादर धन्यवादः प्रदीयते । तेनानेन प्रसीदतां सर्वात्मभूतो विश्वनाथः ।

वशम्वदः

नन्दकिशोर शुक्लः

मु० पो० टेढ़ा, ज़िला उन्नाव ।

# * निवेदनम् *

आसीत्पुरा भरतभूवलयेऽत्र मान्यः
श्रीरामदीनकविरद्भुतभावभव्यः।
यः कान्यकुब्जविबुधेषु यथावकाशं
कीर्तिं ततान निजनामगुणानुरूपाम्॥

स व्याकृतेर्विशदनाय विवादजन्ये
विद्वज्जनैकविजयाय निजश्रमेण।
ग्रंथं गिरामृतभुजां प्रकटीचकार
भाग्योदयेन भुवि संस्कृतशब्दवादम्॥

सोऽयं समस्तमनुजोपकृतौ प्रकामम्
विश्राणयिष्यति सहायमिदं विचार्य।
तस्य प्रपौत्र इह भूवलयप्रसिद्धः
प्राकाश्यमानयति नन्दकिशोर शुक्लः॥

तस्योपयोगमनुभूय बुधेषु हर्षा-
त्तत्प्रेरणापरवशेन मया तदर्थम्।
यत्पद्यजातमरचि प्रकृतं तदेतद्
ग्रंथोपकारि भवतादिति मेऽभिलाषः॥

निवेदक—

अखिलानन्द शर्मा,

कविरत्न।

* श्रीगणेशाय नमः *

# संस्कृतशब्दवादः

राम

आराध्य रामस्य पदारविन्दं,
सीतां स्वतोषां जनकात्मजां ताम्।
सुपश्यतस्संस्कृतवादमन्यै-
र्दुःप्रापमानन्दकरं करोमि ॥

इह धर्माधर्मप्रमाणीभूतसकलवेदशास्त्राणां शब्दस्वरूपत्वाच्छब्दस्वरूपस्तावद्विचार्यते। लोके स्वरूपादिज्ञानाज्ञानप्रवृत्त्यप्रवृत्तिदर्शनात्। न हि कश्चित्स्वरूपादिकमविज्ञाय वस्तुनि प्रवर्तते। तथा हि, लोके प्रथमं घटादिस्वरूपज्ञानं, ततो घटाद्यानयनेच्छा, ततः कृतिः। कृतित्वञ्च फलव्यधिकरणव्यापारविशेषत्वम्। अतएव नैयायिकाः कृतिमत्वस्यैव कर्तृपदार्थत्वमाहुः। तत्र घटादिज्ञानं प्रत्यक्षाश्रयविषयत्वम्, ईश्वरज्ञानं परोक्षाश्रयविषयत्वम् तस्य श्रुतिस्मृतिपुराणादिजन्यत्वात्। चतुर्विधमोक्षस्वरूपनित्यज्ञानानन्दवानीश्वरः स एव परमेश्वर इत्युपगीयत इत्यलम्।

तत्र शब्दः कः पदार्थ इति शब्दस्वरूपज्ञानेच्छायां, संकेत सम्बन्धेनोच्चारितत्वावच्छेदकावच्छिन्नः शब्दपदार्थ इति। उच्चरितत्वं पुण्यजनकत्वम्—"एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति भाष्योक्तेः। उच्च-रितत्वस्यैव तदर्थम्प्रति साधुशब्दत्वम्। संकेतश्च—अस्मा-त्पदादयमर्थो वोधव्य इत्याकारिका ईश्वरेच्छा। तथा च, घटादीनां घटत्वाद्यवच्छिन्नम्प्रत्येव साधुत्वम् अन्यथा घटा-द्युच्चारिते शब्दत्वाविशेषत्वेन गोत्वाद्यवच्छिन्नस्य भानं स्यात्। अतएव घटादीनां गोत्वाद्यवच्छिन्नम्प्रति साधु-शब्दत्ववारणाय संकेत सम्बन्धेन इत्युक्तम्। अतएव "येनो-च्चारितेन सास्ना-लांगूल-ककुद-खुर-विषाणिनां सम्प्रत्ययो भवति स शब्द" इत्युक्तम् भाष्ये।

नैयायिकास्तु—"शब्दं शृणोमीत्यनुभवसिद्धशब्दत्व-जातिमान् शब्दः" इत्याहुः। स च द्विधा—ध्वन्यात्मको, वर्णा-त्मकश्च। आद्यस्तु संगीतशास्त्रसिद्धानेकभेदवान्, तत्का-रणं मुखवीणावंशमुरजभेर्यादि। अन्त्यः ककारादिः। उभय-त्रापि आकाशस्य समवायिकारणत्वम्। तस्य शब्द गुण इति प्रसिद्धत्वात् गुणगुणिनोस्समवायिसम्बन्धात्। वर्णोच्चार-णेच्छया प्रथममुत्पन्नयत्नेन अभिहताग्निना, नाभिप्रदेशात् प्रेरितो वायुर्वेगान्मूर्द्धन्पर्यन्तं गत्वा प्रतिनिवृत्तो वक्रम्प्राप्य, तत्तत्स्थानान्याहत्य वर्णान् जनयतीति वर्णोच्चारणेपि ध्वनि-विशेषस्य सत्त्वम्। अतएव "प्रतीतिपदार्थको लोके ध्वनि-

शब्दः" इत्युक्तम्भाष्ये । एवं कक्काराद्युच्चारितस्य वर्णात्मकत्वम् अतएव येनोच्चारितेन इत्युक्तम्भाष्ये ।

मीमांसकास्तु—गुणगुण्यादीनां तादात्म्यमेव नीलो घटः, चंचलः पृथुः, मृद्घ घटः इत्यभेदानुभवात् अतएव समवायो निष्प्रमाणक इत्याहुः । कारणं त्रिविधम्—समवायि, असमवायि, निमित्तकारणभेदात् । समवायिकारणं भेर्याकाशसंयोगः, ताल्वोष्ठाकाशसंयोगवंशदलाकाशविभागादिरसमवायिकारणम्, जिह्वाताल्वादिसंयोगवंशदलविभागादि निमित्तकारणम् इति विवेकः । यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणम् असमवायिकारणम् । तदुभयभिन्नकारणं निमित्तकारणम् । कारणत्वञ्च जनकतासम्बन्धेन कार्योत्पत्तिसहचरितत्वम् । एतत् त्रिविधकारणमध्ये यद्व्यापारादनन्तरं कार्योत्पत्तिस्तदेव करणम् । लोके एतत् त्रिविधकारणमध्ये समवाय्यसमवायिकारणनाशे कार्यनाशो न तु निमित्तकारणनाशेपि । यथा घटे मृत्तिकारूपं समवायिकारणं तस्याभावे घटविनाशः, तद्भावे कार्योत्पत्तिसहत्वम् । एवं कपालद्वयसंयोगोऽसमवायिकारणम् तस्य नाशे घटनाशः । एवं चक्रदंडादि निमित्तकारणम् तस्य नाशे न गृहे स्थितस्य घटस्य भंगः ।

शास्त्रे तु निमित्तविनाशे कार्यस्यापि विनाशः, अतएव "निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषाश्रीयते ।

अतएव पाणिनीयाः "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायान्निमित्तंविनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यमेव न कुर्वन्ति इत्यनवद्यम्। ननु "ज्योतिष्टोमेन स्वर्गकामो यजेत्" इत्यादौ ज्योतिष्टोमादियागनिवृत्तौ तदुत्पाद्यस्य स्वर्गादिफलस्यापि निवृत्तिः इतिचेन्न तत्र स्वाभाविकी एतादृशी शक्तिरेव यया तन्निवृत्तौ तदुत्पाद्यस्य स्वर्गफलस्यानिवृत्तिः। तस्य तु भोगेनैव क्षयात् कृतकर्मणामवश्यभोग्यत्वात् तदुक्तम् :—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतंकर्म शुभाशुभम् ॥इति॥

ननु एवं "यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन, ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इति भगवद्गीतास्मृति विरोध इतिचेदुच्यते। त्रिविधं कर्म—संचितं, क्रियमाणं, प्रारब्धं चेति। तत्र संचितक्रियमाणे एव ज्ञानाग्निर्भस्मसात् कुरुते, न तु प्रारब्धम्। "सर्वकर्माणि" इत्यस्य प्रारब्धव्यतिरिक्तानि संचितक्रियमाणानि कर्माणि इत्यर्थात् "ब्रह्मण्याधाय कर्माणि संगंत्यक्त्वा करोति यः, लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति वचनात्। नन्वत्र वचने प्रारब्धव्यतिरिक्तमित्युक्तत्वाभावात् कथं तद्व्यतिरिक्तमिति विज्ञायेत् "प्रारब्धमश्नन्नभिमानशून्यः" इति व्याससमृत्या तथैवोपपाद्यत्वात्। पापेन पापकर्मविपाकेन इत्यर्थः। कर्म तु करोत्येव। ननु फलाकांक्षाभावात् किमर्थं

करोति? इतिचेन्न लोकसंग्रहमात्रत्वात्। एवं प्रारब्धकर्मणां भोगादेव नाशो न तु ज्ञानेन इति स्थितम्।

पाप इति पुण्यस्योपलक्षकम्, तेन पुण्यपापयोर्द्वयोरपि विपाकेन न लिप्यते। योगिनां ज्ञानाग्निना दग्धपुण्यपाप-कर्मणामन्यशरीराभावात्। पुण्यपापकर्मभोगाय अन्य-शरीरोत्पत्तिः। तथा च "ऋते ज्ञानान्न मुक्तिः" इति श्रुति विरोधः स्यात् ज्ञानं विना न मुक्तिः किन्तु ज्ञानेनैव इत्यर्थः। एवं च ज्ञानसत्वे मुक्तेरभावात् ज्ञानोत्पत्तिर्वृथा स्यात् "तरति शोकमात्मवित्" इति श्रुतेर्विरोधाच्च। रामनामाद्युच्चारण-मात्रेणैव कोटिजन्मसमुद्भवानि पापानि विलयं यान्तीति वादोऽस्माद्विलक्षण एव नतु माहात्म्यातिशयसूचक एव। वैलक्षण्ये प्रमाणं तु—

"श्वपाकोपि हि संस्मृत्य, शमं याति परां गतिम्" ॥

"अघोपि यत्स्पर्शनधौतपातकः
प्रायात्स्वसाम्यं त्वसतां तु दुर्लभम्" ॥

इत्यादि वचनमेव। एवमेव वेदान्तिन आहुः। केचित्तु सिद्धान्तं कृत्वा "नाभुक्तं क्षीयते कर्म" इति वचनस्य प्रायश्चित्तेनावश्यव्यतिरेकेण संकोचे प्रमाणाभावात् संचित-स्यापि कायव्यूहेन भोगादेव नाशः। भस्मसात् पदं तु लाक्ष-णिकं—शीघ्रमेव भोगान्नाशं लक्षयति इत्याहुः। तत्रोक्तयुक्तिः स्मरणीयेति बोध्यम्। मीमांसकास्तु स्वर्गकामो यजेदित्यादौ

शक्तिद्वारकं सूक्ष्मशक्त्यात्मकं वा फलमिति मतद्वयमाहुः। "यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति, सूक्ष्मशक्त्यात्मकं वापि फलमेवोपजायते" इति वचनात्। नैयायिकास्तु न च चिरविनष्टस्य कालान्तरभाविस्वर्गादिसाधनत्वं साक्षात् युक्तमतो व्यापारत्वेन धर्माधर्मावभ्युपेयावित्याहुः।

एवमाकाशविशेषगुणः शब्दः इत्यपि लक्षणान्तरं। श्रोत्रग्राह्यो गुणश्शब्द इत्यपि। दूरभेरीताड़नस्थले भेर्याकाशसंयोगादुत्पन्नस्य शब्दस्य पुरुषीयश्रोत्रगोचरत्वात् तस्याकाशगुणत्वात्। नन्वाकाशस्य समत्वात्कथं दूरभेरी ताड़नस्थले भेर्याकाशसंयोगादुत्पन्नस्य शब्दस्य मन्दत्वेनानुभवइतिचेत्, अत्र केचित् भेरीताड़नादुत्पन्नश्शब्दः तस्माद्वीचीतरंगन्यायेनान्यः तस्मादन्यस्तस्मादन्य इत्येवं मंदादिभावेन जायमानेषु तेषु पौरुषीयश्रोत्रमागत्य तदवच्छिन्नोत्पन्नस्स्वयमेव गृह्यते। तेषु पूर्वशब्दः असमवायिकारणम्, स च स्ववृत्तिभेर्यादिप्रयोज्यजातिमंतं जनयति। अतएव भेरीशब्दो मया श्रूयते इति न विरुध्यत इत्याहुः। अत्रायम्विचारः।

घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि पञ्चेन्द्रियाणि तानि स्वस्थानस्थितानि एव गंधरसरूपशब्दस्पर्शात्मकान् विषयान् जनयन्ति किम्वा गंधादिदेशं स्वयमेव गत्वा जनयन्तीति। तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्थानस्थितान्येव गंधरसस्पर्शकान् विषयान् जनयन्ति, चक्षुःश्रोत्रेतु

स्वतएव विषयदेशं गत्वा स्वकं स्वकं विषयं गृह्णीतः। श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमन-संभवात्। अतएव भेरीशब्दो मयाश्रुत इति धीर्न विरुध्यते। वीचीतरंगन्यायेन शब्दाच्छब्दस्तस्मादन्य इत्येवं मंदादिभावेन जायमानेषु पौरुषीयश्रोत्रावच्छिन्नोत्पत्तिकल्पनायां गौरवम्। प्रत्ययस्य भ्रमकल्पनागौरवञ्च स्यादित्यवसेय-मित्याहुः।

सोऽयं शब्दो नित्यः "सिद्धं तु नित्यशब्दत्वात्" "सिद्धे शब्दार्थ सम्बन्धे" इति भाष्यवार्तिकोक्तेश्च। अत्र सिद्ध-शब्दस्य नित्यपर्यायत्वम्। तद्यथा, सिद्धा पृथिवी सिद्धा-द्यौस्सिद्धमाकाशमिति। सिद्धा नाम नित्या इत्यर्थः। सिद्ध-शब्दः क्रियानिष्पन्नमप्यर्थं गमयति, अतएव सिद्ध ओदन इत्यादि संगच्छते। अन्यथा, कथं नित्यशब्दस्यानित्या नामोदनादीनां सामानाधिकरण्यं स्यात्। नन्वेवं व्याकरण-शास्त्रस्य वैयर्थ्यं स्यात् तथा च रक्षोहागमलघ्वसंदेहाः प्रयोजनमित्यादि प्रयोजनानाम्भाष्योक्तानामसंगतिरिति-चेत् उच्यते। सिद्धं तु नित्यशब्दत्वादिति भाष्योक्तेर्नित्यत्वे शब्दानां शास्त्रस्य निवर्तकत्वम्। तथा हि आचार्येण भ्वाद-योऽविशेषेणोपदिष्टा न हि तत्र अपूर्वा वर्णा भाव्यन्ते, किन्तु भ्वाद्युपदिष्टे भवतीत्यादीनाम् असाधुत्वबुद्धिः प्राप्नोति इति तेषां शास्त्रेण साधुत्वं क्रियते। लडादिस्थानिकेषु प्रत्ययेषु भवतीत्यादयस्साधवो भवन्तीति। अतएव प्राचीन ग्रन्थे

तत्तत्सूत्रवृत्तौ भवतीति क्रिया संगच्छते। ध्रुवं कूटस्थमविचाल्यनपायोयजनविकार्यनुत्पत्त्यवृद्धि अव्ययोगि यत्तन्नित्यम्। अतएव ध्वनिव्यंग्यस्य वर्णात्मकस्य शब्दस्य नित्यत्वंवदतां केषाश्चिदुक्तिस्साध्वी। एवं च वर्णानां नित्यत्वेन वायुसंयोगोत्पन्नध्वनिना अभिव्यक्तिर्नतु उत्पत्तिः इति अभिव्यक्तिपक्षः स्थितः।

अतएव अभिव्यक्तिपक्षे तु क्रमेणाभिव्यक्त्या समुदायाभावात् इति कैयटः। कार्योपि शब्दः उत्पत्तिविनाशत्वात् घटवत्। अतएव ध्वनिरूपस्य शब्दत्वमाचक्षाणाः ध्वनिरेव शब्दस्स च कार्यः तत् व्यतिरेकेण अन्यस्यानुपलम्भादित्याहुः। एवं वर्णानामुत्पत्तिपक्षः। अतएव प्रत्येकमुत्पत्तिपक्षे यौगपद्येन उत्पत्त्यभावादिति कैयटः। अतएव नैयायिकाः उत्पन्नो गकारो नष्टो गकार इति प्रतीतेरुत्पत्तिनाशवानेव शब्दः सोयमिति तज्जातीयसोयमिति भासते इत्याहुः। मीमांसकास्तु सोयं शब्दो नित्य एव, योयं गकारश्शिवेनोक्तः स एव विष्णुनोच्यते। प्रहरात्पूर्वमुक्त एवेदानीमुच्यते इति प्रत्यभिज्ञानात्। विभुश्च, योयं काश्यां हकारः श्रुतस्स एव सोतावने नोच्यत इति प्रतीतः सर्वदेशव्यापिनस्तस्यानुभवात्। विभुत्वाच्च द्रव्यमेव सः योयं तारो मयाश्रुतस्स एव मंदः श्रूयते इति प्रतीतेः, तारत्वादिकमपि तत्र न विरुध्यत इत्याहुः। वेदान्तिनस्तु गकारादिवर्णानां न क्षणिकत्वं सोयं गकार इत्यभिज्ञाविरोधात्। तथा च वर्णपदवाक्यरूपस्य

वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं, प्रलयकालीन-ध्वंसप्रतियोगित्वं च। न तु मध्ये वर्णानामुत्पत्तिविनाशौ भवतः। एवं वेदस्याप्यनित्यत्वम् तथा च श्रुतिः उत्पत्ति-मत्त्वं च—

"अस्य महतो भूतस्य निःश्वसितमेतत्,
यदृग्वेदो यजुर्वेदः सामवेदः" इत्याहुः।

एवं च द्विविधोऽपि पक्षो भाष्यसिद्धो नित्योऽनित्य-श्चेति। भाष्यं च, यद्येवं नित्यः अथापि कार्यः उभयथापि लक्षणम्प्रवर्त्यमिति। अतएव पाणिनितत्तत्सूत्रवृत्तौ स्यादिति क्रिया संगच्छते अत्र विधौलिङौचित्यात्। विधिरपूर्वस्य भवति, अत्यन्ताप्राप्तौ सत्यामेव विधेस्सत्त्वात्। तथा च मीमांसावचनम्—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति, तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते"। तथा च "इकोयणचि" इत्यादीनां विधित्वं स्थितम्। "वृद्धिरादैच्" इत्यादीनां तु संज्ञाया विधानात् संज्ञासूत्रत्वम्। एवम् "अइउण्" इत्यादीनामपि वोध्यम्। नन्वेवं संज्ञाविधाना-द्विधिसूत्रत्वं स्यात् विधिरत्यन्तमप्राप्तौ इति वचनात्। न हि येन यद्विधानं स तन्नामको भवति, यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत्" इत्यादौ यजनस्य विधानान्न तन्नामकः किन्तु विधिरेव। इकोयणचीत्यादौ च यण् विधानान्न यण्-नामकः किन्तु विधिरेव।

एवं वृद्धिविधायकेऽपि इतिचेदुच्यते– येनापूर्वं कार्यं विधीयते तस्यैव विधायकत्वात् विधिसूत्रत्वम्। न हि संज्ञादि-विधायकेनापूर्वं कार्यं विधीयते किन्तु संज्ञामात्रम् ज्ञायते, तस्या अपूर्वकार्यत्वाभावात्। क्रियते व्यापारेण निर्वर्त्यते यत्तत्कार्यम् इत्यन्वर्थव्युत्पत्तेः, कृधातूत्तरप्रत्ययस्य तदर्थ-वाचकत्वाच्च। अन्यथा संज्ञासूत्रत्वमुच्छिन्नं स्यात्। नन्वेव-मपि, "एकादशेन्हि पिता नाम कुर्यात्" इत्यादेरपि विधि-वाक्यस्य नामसंज्ञाविधायकत्वेन संज्ञावाक्यत्वं स्यादिति-चेन्न, कुर्यादिति क्रियापदेन तस्यैवार्थस्य प्रतीतेः। द्विअक्षरं, चतुरक्षरं वा कृतं नाम कुर्यान्न तद्धितम्" इति भाष्याच्च। कृतमित्यस्य निर्वर्तितमित्यर्थः। तथा च—

"संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते"।

इति षड्विधसूत्रमध्ये किं संज्ञासूत्रमिति प्रष्टव्यमिति दिक्। ननु कार्यशब्दवादे "सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः, एकदेश विकारेहि नित्यत्वं नोपपद्यते"। इत्युक्तिः कथं संगच्छते इति चेत् उच्यते, अस्याभ्युपगमं नित्यशब्द-वादे तथाचेकोयणचि इत्यादौ अनिर्धारितषष्ठीस्थाने योगे-तिपरिभाषोपस्थितेरिकस्थाने इकं विनाश्य यण् स्यादिति सूत्रार्थेन शब्दनित्यताहानिः। किन्तु बुद्धेरेव विपरिणामो न शब्दादीनाम्। एवं च इकारबुद्धिप्रसंगे यकारबुद्धिः कार्या इत्यर्थो निष्पन्नः। तथा च वार्तिकम्—"कार्यविपरिणा-

माद्वा" इति । कार्यमिह ज्ञानम् योग्यतावलात् । तथा च "ज्ञाननिष्ठमुत्पत्त्यादिकं शब्दे आरोप्यते" इत्यर्थः इति कैयटः । तत्र वर्णात्मकशब्दो द्विधा लौकिको, वैदिकश्च । "केषां शब्दानाम् लौकिकानां वैदिकानाञ्च" इति भाष्योक्तेः । लौकिकास्तावत् गौः अश्वः पुरुषो हस्ती शकुनिः मृगः ब्राह्मणः इति । वैदिकाः खल्वपि शन्नोदेवी-रभीष्टये, अग्निमीले पुरोहितम्, इषेत्वोर्जेत्वा, अग्न आयाहि वीतये इति । लोके परंपरासम्बन्धेन भवा इति लौकिकाः नतु यस्य कस्यचिदिच्छया । एवं सर्वेष्वपि लौकि-केषु वस्तुषु बोध्यम्—

यद्यपि स्यात् स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।
तथापि लौकिकाचारं मनसापि न लंघयेत् ॥

इति स्मृत्या तस्यैवार्थस्य ध्वनितत्वात् । वेदे भवा वैदिकाः अध्यात्मादित्वात् ठञ् । द्विविधोपि शब्दश्शक्यलक्ष्यव्यंग्य-भेदेन पुनस्त्रिधा । शक्तिविषयः शक्यः, बोधकत्वं शक्तिः तच्चानादि । तदुक्तंहरिणा "इन्द्रियाणां स्वविषयेष्वनादिर्यो-ग्यता यथा, अनादिरर्थैश्शब्दानां सम्बन्धो योग्यता तथा" इति । अतएव शाब्दबोधे शक्तिग्रहस्य हेतुत्वात् बोधोत्तरं शक्तिग्रहः, शक्तिग्रहोत्तरं बोधः इति अन्योन्याश्रयदोषानव-काशः । "बोधजननसामर्थ्यमेव शब्दस्यार्थेन सम्बन्धः" इति विवरणेऽप्युक्तम् । मीमांसकास्तु—संकेतजन्यग्रहविषय-मभिधानामपदार्थान्तरं शक्तिः, सा च कार्यान्विते पदानाम् ।

तद्यथा, घटमानय घटं नय इत्यादि लौकिकव्यवहारम् पश्यतस्समीपस्थस्य वालस्य घटपटाद्यानयनादिकार्यम् पश्यन् तथैव ज्ञात्वाऽन्योपि समीपस्थः प्रवर्तते, इति व्यवहारत एव मुख्यशक्तिग्रहः इत्याहुः ।

नैयायिकास्तु—संकेत एवाभिधा न तु मीमांसकोक्तम्पदार्थान्तरम् । संकेतश्च अस्मात्पदादयमर्थो वोद्धव्यः इतीश्वरेच्छा । सा च पूर्वोक्तरीत्या व्यवहारादेव ग्राह्या । सृष्ट्यादौ ईश्वर एव प्रयोज्यप्रयोजकवृद्धस्सन् व्यवहरति । तस्मादन्यस्तस्मादन्य इति पूर्वसिद्धव्यवहारात् तद्ग्रहः । आधुनिकमैत्रादिपदेष्वपि पित्रादिकृता साप्येव । "एकादशेन्हि पिता नाम कुर्यात्" इति शास्त्रात् । पूर्वोक्तरीत्या अत्रापि अन्योन्याश्रयो न दोषः । गगर्यादिपदे तु शक्तिभ्रमाद्बोधः । भ्रमप्रमा साधारणशक्तिज्ञानस्य हेतुत्वात् । तत्रेश्वरेच्छा नास्ति शक्तौ सत्यां न म्लेच्छितवै नापभाषितवै इत्यादि श्रुतिविरोधावकाशः इत्याहुः ।

वेदान्तिनस्तु—शक्तिर्नाम पदार्थानामर्थेषु मुख्या वृत्तिः । यथा, घटादिपदानां तत्तदाकृतिविशिष्टे वस्तुविशेषे वृत्तिस्सा च पदार्थान्तरम् । सिद्धान्ते कारणादिषु कार्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् । सा च तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया इत्याहुः । किम्पुनः आकृतिः पदार्थ आहोस्वित् द्रव्यम् ? उभयमित्याहेतिभाष्यात् जातौ व्यक्तौ च शक्तिग्रहः । अतएव "जात्याख्यायामेकस्मिन् बहुवचन-

मन्यतरस्याम् सरूपाणामेकशेष एक विभक्तौ" इत्यादि पाणिनिस्सूत्रमारब्धवान् । अतश्चैव भाष्यकारः अणुदित्सवर्णस्य चाप्रत्यय इत्यादीनि सूत्राणि प्रत्याचख्यौ, समर्थितवानपि यद्यपि न ह्याकृतिपदार्थस्य द्रव्यं पदार्थ इति भाष्याद्विशिष्टे शक्तिग्रहः । एकस्मिन् शक्तावन्यतरस्याप्रामाण्यापत्तेश्च तदुक्तम्—"को हि मीमांसको ब्रूयाद्विरोधे वाच्ययोर्मिथः, एकम्प्रमाणमितरदप्रमाणमितीदृशम्" इति । तथापि उक्तभाष्यविरोधाद्द्वयोरपि शक्तिग्रहः । न हि आकृतिपदार्थस्य द्रव्यं पदार्थ इति भाष्यं तु एकं नामार्थ इतिपक्षबोध्यम् । पंचकं नामार्थो भाष्यसिद्धः । तदुक्तं हरिणा :--

एकं द्विकं त्रिकं चाथ चतुष्कं पंचकं तथा ।
नामार्था इति सर्वेऽमी पक्षाश्शास्त्रे निरूपिताः ॥

एकमित्यस्यायमभिप्रायः शक्तिज्ञाने विषयतयावच्छेदिका जातिरेव तथा च घटत्वविशिष्टबोधे घटत्वांशे अन्या प्रकारकघटत्वशक्तिज्ञानत्वेन हेतुता इति कार्यकारणभाव इति । अस्मिन्पक्षे असंख्यातव्यक्तीनां शक्तत्वे गौरवाज्जातिरेव शक्त्या व्यक्तिबोधस्तु लक्षणया । अतएव गां दद्यात् व्रीहीनवहन्ती इत्यादिस्थले जातावयोग्यत्वेन व्यक्तौ गोदानकर्मता सिद्ध्यति । लक्षणया व्यक्तेरपि प्रकृत्यर्थत्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धान्तात् । एवं च नाग्रहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामयति इति न्यायो युक्तः । यद्यपि केवल जातिपक्षे सरूपाणामित्यादिसूत्रारंभेण

व्यक्तिबोधः, व्यक्तिपक्षे जात्याख्यायामेकस्मिन्नित्यादि सूत्रारम्भेण जातिबोधः। तथापि भाष्यकारेण व्यक्तिपक्षे गृहीतायाः "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इत्यस्याः परिभाषायाः जातिपक्षे गृहीतायाः "पुनः प्रसंग-विज्ञानात्" इत्यादि परिभाषायाश्च नोपपत्तिस्तस्माल्लक्ष्य-सिद्ध्ये द्वयोरपि शक्तिग्रह इत्येव न्याय्यम्।

जातिवादिनस्तु—शब्द प्रतिपाद्या जातिस्तस्याः सर्व-व्यक्तिषु एकाकारत्वेन वर्तमानत्वात् सन्निति निश्चीयते। गवादिशब्दैश्चाभिधीयते। अतस्तदवच्छिन्नद्रव्यस्य प्रतीति विषयत्वात् प्रतीतिः। एवं शुक्लादीनामपि गुणसमवेतत्वात् जात्यभिधायकत्वम्, डित्थादिशब्दानामपि कौमाराद्यवस्था-भेदेऽपि स एवायमित्यभिन्नप्रत्ययदर्शनात् तन्निमित्ता जाति-र्वाच्या।साभिन्नप्रत्ययदर्शनात् क्रियास्वपीत्याहुः। ननु "यत्रार्थान्तरनिरपेक्षा शब्दस्य प्रवृत्तिस्सोर्थः प्रातिपदिकार्थ" इति न्यायकारमते जातिगुणक्रियाशब्दानां जातिगुणक्रिया-पेक्षत्वे सति द्रव्ये वृत्तित्वादित्यर्थान्तरापेक्षत्वात् तद्वाचिभ्य-श्शब्देभ्यः प्रथमा न स्यादितिचेत् उच्यते,—यस्मिन् प्राति-पदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्राति-पदिकार्थः, इति लक्षणावश्यकत्वेन शक्यलक्ष्यगौणानां सर्वेषां संग्रहः। एवं जात्यादिशब्दप्रातिपदिकोच्चारिते जात्यादिविशिष्ट एव शक्तिग्रहात् तद्विशिष्टस्यैवार्थस्य जात्यादिशब्दैरभिधानात् जात्याद्यपेक्षास्वार्थमेवापेक्षित्य

जात्यादिविशिष्ट एव तेषामर्थानामर्थान्तरमिति न्यायकारमतेपि न दोषः।

व्यक्तिवादिनस्तु—शब्दप्रतिपाद्या व्यक्तिः। जातेस्तूपलक्षणभावेनाश्रयणात् आनन्त्यादिदोषानवकाश इत्याहुः। एवं को हि मीमांसको ब्रूयादित्यपि न विरुध्यते। अन्येतु—नह्याकृतिपदार्थस्येतिभाष्याद्विशिष्टे शक्तिम्वर्णयन्ति। तन्मते किम्पुन आकृतिरिति भाष्यं द्विकं नामार्थ इति पक्षे बोध्यम्। तथाचोक्तपरिभाषाणामनुपपत्तिः। एवं बोधकत्वं शक्तिरिति शाब्दिकमते सर्वत्र बोधकत्वात् शक्त्यैव निर्वाहे लक्षणोच्छेदापत्तिः। गंगायां घोषः इत्यादि लाक्षणिकस्थलेपि तस्य सत्वात्। एवं च एकवृत्त्यैव निर्वाहे अनेकवृत्तिकल्पनमन्याय्यमिति सिद्धम्। तथा च शाब्दबोधे शक्तिजन्योपस्थितिहेतुक एव कार्यकारणभावः। लक्षणापक्षे तु शाब्दबोधे शक्तिजन्योपस्थितिर्हेतुः लक्षणाजन्योपस्थितिर्हेतुरिति कार्यकारणभावद्वयमिति गौरवं स्पष्टम्। अतएव प्रायस्सर्वे सर्वार्थवाचका इति सिद्धान्तोपपत्तिः। पदेन सति तात्पर्ये प्रायस्सर्वेषां बोधनात्। तदुक्तम्वाक्यप्रदीपे—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदात्सर्वत्र सार्वार्थ्यन्तस्य भिद्यते ॥१॥
यौगपद्यमतिक्रम्य पर्यायेष्ववतिष्ठते।
अर्थप्रकरणाभ्याम्वा योगाच्छब्दान्तरेण वा ॥२॥

यथा सास्नादिमान् पिंडो गोशब्देनाभिधीयते।
तथा स एव गो शब्दो वाहीकेपि व्यवस्थितः।३।
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मिणः।
प्रसिद्धत्वाच्च गौणत्वं मुख्यत्वं चोपजायते।४।

अतएव वृद्धिरादैजिति सूत्रे भाष्ये अनेकशक्तेश्शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगादिति कैयटः। अनेकस्मिन् अनेका वा शक्तिरस्येति विग्रहः। अन्यायश्चानेकार्थत्वमिति तु लाघवमूलकत्वान्नेति विरोधाभावः। अपभ्रंशेपि शक्तिसत्त्वे तत्राप्यर्थबोधस्साधत्वं च। समानायामर्थावगतौ शब्देनापशब्देन चेति भाष्यात्। न च न म्लेच्छितवै इत्यादि श्रुतिविरोधः, याज्ञे कर्मणि नियम अन्यत्रानिमइति भाष्यात् याज्ञे कर्मण्येव तस्यनिषेधात्। "एकश्शब्दः सम्यक् ज्ञातस्सुप्रयुक्तस्स्वर्गे लोके कामधुक् भवति" इति "साधूनेवप्रयुंजीत" इत्युक्तत्वात् पुण्यजननयोग्यत्वं साधुत्वं, पापजननयोग्यत्वम् असाधुत्वम् इतिस्थितम्। "द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति भाष्यादाधुनिकदेवदत्तादिपदानामपि साधुत्वम्।

एवं यश्शब्दो यत्रार्थे व्याकरणव्युत्पन्नः स तत्रार्थे साधुरिति फलितम्। नन्वेवं "गंगायां घोषः" "काकेभ्यो दधि रक्ष्यताम्" इत्यादि लाक्षणिकस्थले लाक्षणिकानां तत्तदर्थे व्याकरणव्युत्पादनत्वाभावात् तेषामप्यसाधुतापत्तिरिति

चेन्न, तेषां गुणे व्याकरणव्युत्पादनात् तद्द्वारेण साधुत्वम् । एवं गौणेष्वपि बोध्यम् । नन्वेवमाधुनिकलाक्षणिकानामपि साधुत्वं स्यात्, तथा च विद्यमाने वस्तुनि केनचिल्लक्षणया नास्तीत्युक्ते तस्यासत्यत्वानापत्तिरिति न आश्चर्यमनित्ये नित्यवीप्सयोः । "उपाया शिक्षमाणानाम्बालानामुपलालना, असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहित" इत्यादिषु सत्यासत्यपदानामस्वरसापत्तेः । एवं सर्वस्यैव सत्यासत्यात्मकत्वात् । अतएव "इदम् स्वभार्यायै देहि" इत्यर्थे इदम्ममास्ति स्वभार्याम्मह्यं देहीत्यादिवाक्यं लक्षणयाप्यसाधुरेवेत्यनवद्यमिति दिक् । शक्तिग्रहस्तु व्याकरणादिना तथाचोक्तं वृद्धैः—

शक्तिग्रहं व्याकरणोपमानको-
शाप्तवाक्यात् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

गगर्यादिपदबोधस्तु शक्तिभ्रमादिति नैयायिकोक्तं न युक्तम् । सन्मात्रविषयिण्या ईश्वरेच्छायास्तत्रापि सत्त्वाच्छक्तिरिष्टैव । घटशब्दगगरीशब्दयोर्विजातीयानुपूर्वीकतया भ्रमहेतोस्साधारणधर्मदर्शनस्याभावात् गगरीपदादौ भ्रमानुपपत्तिश्च । केचित्तु साधुस्मरणद्वाराऽसाधुष्वर्थबोधः । तदुक्तम्वाक्यप्रदीपे—"ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः,

तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥१॥ न शिष्टै रनुगम्यन्तेपर्याया इव साधवः, न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥२॥ अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते, अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥३॥ एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते, तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते" ॥४॥ इत्याहुः । अपभ्रंशाः परंपरया निरूढ़िमागतास्साधुशब्दान्स्मारयंत एवार्थम्प्रत्यापयन्ति इत्यपि केचित् । साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इत्यन्ये । ननु घटपदात्समवायसम्बन्धेनोपस्थिताकाशस्यापि शाब्दबोधविषयत्वं स्यादिति चेन्न, वृत्त्युपस्थापितस्यैव शाब्दबोधविषयत्वनियमात् । शक्तिस्सामर्थ्यं यथा दीपादौ तेजसि ग्राह्यत्वग्राहकत्वसामर्थ्यमेवं शब्देपि । तदुक्तं वाक्यप्रदीपे :—

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥ इति ॥

तच्च स्वरूपसदेवोपयुज्यते न तु ज्ञातम् । अगृहीतशक्तिकस्य तु सन्निकर्षादिवद्बोधाभावप्रयोजकोभूताभावप्रतियोगीतात्पर्यग्रहाभावान्न बोध इत्यन्ये । नैयायिकाः 'जात्याकृतिव्यक्तयः पदार्थः' इतिन्यायसूत्राज्जातौ व्यक्तौ वैशिष्ट्ये च शक्तिम्वर्णयन्ति । एकशक्तिसूचनाय पदार्थं इत्येकवचनम् । नव्यमते तु व्यक्तौ शक्तिर्नतु जातौ गौरवात् । तथा च घटत्वविशिष्टो घट इति शाब्दबोधः । घटत्वधर्मितावच्छेदक-

शक्तिग्रहस्य हेतुत्वात्। प्राभाकरव्यतिरिक्तमीमांसकास्तु—'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इतिन्यायाज्जातौ शक्तिम्मन्यन्ते। तथा च 'ब्राह्मणाय गां ददाति' इत्यत्र जातावयोग्यत्वेन व्यक्तौ गोदानकर्मता न सिद्धयति। 'कर्मणि द्वितीया' इतिसूत्रस्वरसात् व्यक्तेरेव कर्मता नतु गोत्वस्य। 'सुपां कर्मादयोप्यर्थास्संख्या चैव तथा तिङाम्' इति भाष्याच्च। सुप् च प्रातिपदिकादेव न तु गोत्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धान्तात्। हरिणाप्युक्तम्:—

आश्रयोवधिरुद्देश्यस्सम्बन्धश्शक्तिरेव वा।
यथातथं विभक्त्यर्थास्सुपांकर्मेति भाष्यतः ॥इति॥

एवं बहुविरुद्धाक्रान्तत्वाद्विशेष्यंनाभिधा गच्छेदिति न्यायमूलकजातिशक्तिरयोग्यैवेति न वाच्यम्। व्यक्तेस्तु 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इतिन्यायेन जातिराश्रयं विनानुपपन्ना इत्येवार्थसत्त्वेन लाभात्। एवं च व्यक्तिबोधनाय न लक्षणापि गृहीतव्या। एतेन गोपदस्य गोत्वे शक्तिर्व्यक्तौ लक्षणा इति वदंतो मंडनमिश्राः निरस्ताः। दीक्षितमते यत्र गोत्वस्यान्वयानुपपत्तिर्गामानयेत्यादौ तत्रैव व्यक्तेराक्षेपो यत्र गोत्वस्य अन्वयसंभवस्तत्र न। अन्वयसंभवे तु अनुपपत्तिज्ञानस्यैवासंभवादिति व्यक्तेर्न लाभ इति। ननु मंडनमिश्रमते लक्षणा जातावस्तिनास्तित्वेन

हि कश्चिद्विवक्ष्यति। 'नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषण' इतिन्यायमूलिकात्वात् गृहीतव्यैव। गंगायां घोष-मत्स्यौस्तः इतिवद्वृत्तिद्वयविरोधोपि नेतिचेन्न, तत्र शक्या-दन्येन रूपेण ज्ञाते भवति लक्षणेति विरोधान्नादर्तव्या। येन रूपेण ज्ञाते तेनैव शाब्दबोधापत्तिश्च। लक्ष्यतावच्छेदकरूपे-णैव लक्ष्यस्य भाननियमात्। एतेन व्यक्तित्वेन सास्नादिम-त्त्वेन ज्ञातमिति निरस्तम्।

केचिन्नैयायिकाः—व्यक्तेरानन्त्यात् व्यभिचाराच्च न व्यक्तिमात्रं शक्यम्। व्यक्त्यप्रतीत्यभावप्रसंगान्न वा जाति-मात्रम्। नचाक्षेपात् व्यक्तिप्रतीतिरिति वाच्यम्, आक्षिप्तस्य शाब्दान्वयित्वाभावात्। वृत्त्योपस्थितस्यैव शाब्दबोधविषय-त्वोपपत्तिरिति भावः। तस्माद्विशिष्ट एव संकेत इतिवदन्ति। सौगतास्तु—व्यक्तावानंत्यादिदोषाद्भावस्य च देशकाला-नुगमाभावात् तदनुगतायामतद्व्यावृत्तौ संकेतः—इत्याहुः। समासे तु यथा पंकजशब्दे समुदाये शक्तिस्तथातिरिक्तैव समु-दाये यथा 'राज्ञः पुरुषः' इत्यत्र न च राजनि शक्तिर्न च पुरुषे, राजपुरुष इति समुदायेभिधीयते। ननु व्यपेक्षापक्षोपि भाष्याकारेणोक्तस्तथा च राजपुरुष इत्यादौ नातिरिक्ता शक्तिः किन्तु अन्तर्वर्तिपदार्थक्लृप्तैव। एवं च तत्पदादेवो-पस्थितिसम्भवे अतिरिक्तकल्पनस्य गौरवादिति चेत्स-त्यम्। अयं पक्षो मतान्तरमादाय भाष्यकारेणोक्तो न तु स्वमतेन। अतएव व्यपेक्षापक्षमुद्भाव्य 'अथैतस्मिन् व्यपे-क्षायां सामर्थ्ये योसावेकार्थीभावकृतो विशेषस्स वक्तव्य'

इत्युक्तं समर्थसूत्रे भाष्ये। एवं पंचस्वपि वृत्तिषु बोध्यम्। पंचवृत्तयश्च कृत्तद्धितसमाससनाद्यंतधातुरूपाः इति। नानार्थस्थले तु संयोगादिना शक्तिर्नियम्यते। यथा, 'सशंखचक्रो हरिः' इत्यादिषु शंखादिसंयोगेन हरिशब्दस्याच्युते। संयोगादयश्च—

'संयोगो विप्रयोगश्च साहचर्यम्विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥१॥
सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥२॥ इति

अभियुक्तवचनमिदम्। प्रसिद्धार्थस्य गुणविशेषरूपस्सम्बन्धः संयोगः। तत्र क्रमेणोदाहरणानि। विप्रयोगस्तादृशसम्बन्धाभावः। यथा 'अशंखचक्रो हरिः' इत्यत्र शंखादिसम्बन्धाभावः। साहचर्यत्वं एकस्मिन्नर्थे प्रसिद्धपरस्परसापेक्षत्वम्। यथा, 'रामलक्ष्मणौ' इति। अत्र नानार्थस्य रामपदस्य दाशरथिलक्ष्मणसाहचर्येण दाशरथित्वं ज्ञातव्यमिति विशेषस्मृतिः। रामपदस्य मृगविशेषेपि शक्तत्वाद्रामपदं नानार्थः। विरोधः प्रसिद्धपरस्परसत्वासत्वसापेक्षत्वे सति सहस्थितित्वाभावः। यथा, 'छायातपौ' इति। अत्र छायापदस्य कान्तावपि शक्तत्वाच्छायापदं नानार्थः। छायापदस्य आतपाभावे नियमनम्। 'वनपावकौ' इत्यादिष्वभिधानियमनाभावाय सत्यंत पदम्। जलवाचिनो वनशब्दस्य वृक्षसमूहेपि शक्तत्वान्नानार्थत्वम्। एवमत्र 'महतीछाया' इत्युच्चा-

रिते सति आतपस्य सत्त्वं ज्ञायते। तस्विना तस्या अभावात्। अत्र 'महातप' इत्युच्चारिते छायाभावो ज्ञायते, इति तयोस्सत्वासत्वसापेक्षत्वम्। आतप इति तेजोमात्रोपलक्षकम्। तथा च, चन्द्रादिप्रकाशच्छायायां नातिव्याप्तिः।

ननु कथं जलमुकुरादौ छाया दृश्यते, तत्र तेजोऽसत्वादितिचेन्न; आतपाभावस्यैव छायापदत्वात्। जलमुकुरादौ तु स्वरूपप्रतिविंबं नतुच्छाया। वस्तुतस्तु तत्रापि तेजोविद्यमानत्वम् तत्राप्यंधकारस्थे प्रतिविम्बदर्शनाभावात्। रूपस्य तेजोविषयत्वादक्षिगोलके सूर्यान्शाभावे रूपदर्शनाभावात् वध्यघातकभावश्चापि विरोधिता। यथा 'रामार्जुनगतिस्तयोः' इत्यत्र रामार्जुनपदयोर्भार्गवकार्तवीर्ययोः। अत्र रामार्जुनपदयोर्दाशरथ्यादिरामपार्थयोश्शक्तत्वान्नानार्थत्वम्। अर्थः अनन्यसाध्यं प्रयोजनम्। यथा, 'रामं भज विमुक्तये' इत्यत्र अनन्यसाध्यविमुक्तिरूपप्रयोजनात् रामपदस्य दाशरथौ। ननु शिवादीनामपि विमुक्तिदायकत्वात्कथमनन्यसाध्यमित्युक्तमितिचेत् सत्यम्, पञ्चानां देवानामैक्यत्वात्। तदुक्तम् पद्मपुराणे कार्तिकमाहात्म्ये—"सौराश्शैवाश्च गाणेशा वैष्णवाश्शक्तिपूजकाः, मामेव प्राप्नुवन्तीह वर्षापस्सागरं यथा। एकोऽहं पञ्चधा जातः क्रीडया नामभिः किल, देवदत्तो यथा कश्चित्पुत्राद्याह्वाननामभिः"। भागवतेपि च—

सत्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्यधत्ते।

स्थित्यादये हरिविरंचिहरेतिसंज्ञाः,
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः। इति॥

अस्यार्थः—सत्वादयः प्रकृतेर्मायाया गुणा न तु आत्मनः। सत्वादिसाम्यावस्था प्रकृतिः। तैर्मायागुणैस्सत्त्वादिभिर्युक्तस्तत्सम्बन्धं प्राप्तः परः परमात्मा मायातः परो ब्रह्मरूपो नित्यानन्दमय इत्यर्थः। पुरुषस्सर्वान्तश्शरीरश्शायीति यौगिकः पुरुषशब्दो न तु रूढः। सर्वान्तर्यामितया वर्तमान इत्यर्थः। भाविपुरुषत्वाश्रयेण पर इति पुंल्लिगत्वेन निर्देशः। एकः "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन" इति-श्रुतिप्रतिपाद्यस्सजातीयविजातीयस्वगतभेदरहितो हर्यादि-भेदरहितो वा। अस्य विश्वस्य स्थित्यादये उत्पत्तिं पालनं नाशं च कर्तुं हरिविरंचिहर इति संज्ञाः धत्ते स्वेच्छयैव दधाति। हरिविरंचिहरा इतिवक्तव्ये संधिभावस्त्वार्षः। क्रियार्थोपपदस्येति चतुर्थी। संज्ञा इति कथनेन स्वरूप-निरासः। एवं संज्ञा एव दधते न तु स्वरूपमित्यर्थः। हर्यादि-स्वरूपस्तु अस्मदादिस्थूलदृष्टिगोचरसगुणब्रह्मज्ञानाय, भक्तो-पासनाय वा, त्रिगुणावच्छिन्नत्वज्ञापनाय वा, आभासमात्र-मेव। सगुणनिर्गुण इति ब्रह्मणो रूपद्वयं वस्तुतोऽनिर्वच-नीयमिति ज्ञापनायेति वा। इदं तु वेदान्तसूत्रभास्करभाष्ये स्पष्टम्। अतएव हर्यादीनां कृष्णादिगुणयुक्तत्वं युक्तम्।

यद्वा संज्ञा आश्रयं विना अनुपपन्ना इत्येवं रूपोऽर्थापत्त्या स्वरूपाभासो युक्तः। तदुक्तं वृद्धिसूत्रभाष्ये,—'सतो हि

कार्यिणः कार्येण भवितव्यम्' इति। तैर्युक्तः संज्ञा धत्ते इत्यनेन पदेन त्रयोपि हर्य्यादयस्त्रिगुणावच्छिन्ना, न तु एकैकगुणावच्छिन्ना इति सूच्यते। एवं सति सर्वा सृष्टिरपि त्रिगुणावच्छिन्नैव भवति। तत्र त्रिगुणावच्छिन्नानां त्रयाणां मध्ये श्रेयांसि कस्माद्भवन्ति ? इत्याकांक्षायामाह सत्त्वतनोरिति। सत्त्वावच्छिन्नस्वरूपादेव नृणां मर्त्यधर्मिणां श्रेयांसि पंचविधमुक्तिफलानि स्युः। न तु रजस्तमोवच्छिन्नादित्यर्थः। परमार्थस्त्वयमेवार्थः। नन्वेवमपि "ब्रह्मादयो विविधलिंगभिदाभिमाना" इत्यादिना विरोध इति चेन्न, स्वरूपधारणाभिप्रायेण लिंगभिदाभिमाना इत्युक्तेः। यद्वा ब्रह्म आदिर्येषां ते ब्रह्मादय इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। ब्रह्मेति पंचानामुपलक्षकम्। तेन लिंगभिदाभिमाना पंचदेवातिरिक्त देवा गृह्यन्ते। लिंगभेदस्तु जीवानां न तु तेषाम्। नन्वेवमपि, गजेन्द्रकृतनिर्विशेषस्तुतौ ते कथं नाययुरिति न शंकनीयम् तस्य हर्यवताराभिप्रायकत्वात्। अन्यथा 'यद्वै ध्यायति ते वयम्' इति अष्टमस्कंधश्लोको विरुध्येत्। नन्वेवम्—

इच्छां चक्रे यदा कृष्णो मायां पुरुषरूपधृक्
ब्रह्माविष्णुश्शिवश्चापि रजस्सत्वतमोगुणैः
पुरुषास्त्रय उत्तस्थुरधिकारांस्तदादिशत् ॥इति॥

स्कंदपुराणवचनविरोध इति चेन्न, अत्रापि ब्रह्मादयस्सत्त्वादिगुणैस्त्रयः पुरुषा उत्तस्थुरित्यादिकमाविर्भाव-

प्रकारः। कृष्ण एव त्रिरूपाभासेनाविर्बभूवेति निष्कर्षः। अन्यथा, एकोहं पंचधाजात इति श्रीकृष्णवाक्यमेव विरुध्येत्। एवमत्रापि संज्ञा एव ज्ञातव्या इति परमार्थः। एवं त्रयाणामपि मोक्षदातृत्वशक्तिः। नन्वेवमपि "वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः। एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः" ॥ इति विरोध इत्यपि न, अस्माकं मध्ये एको विष्णुरेव तस्य कैवल्यस्येश्वरो न तु पंचानां मध्ये इत्यर्थात्। यद्वा विष्णुरिति सत्वगुणावच्छिन्नस्य वाचकः। तथा च सत्त्वगुणावच्छिन्न एव कैवल्यस्येश्वर इत्यर्थे न दोषः। गजेन्द्रकृतनिर्विशेषस्तुतौ एको विष्णुरेव एकशिव एव एको ब्रह्मैव मुक्तिदाता इत्यर्थे न दोषः। पञ्चानामैक्यादिति पूर्वोक्तं न विस्मरणीयम्। एवं सर्वत्र ज्ञेयम्। तत्र त्रयाणां हर्यादीनां मध्ये सत्त्वतनोर्विष्णोरेव नृणां श्रेयांसि स्युरित्यर्थे दोषः। तत्रायम्विचारः—

किम्वा ब्रह्मशिवयोर्मुक्तिदाने सामर्थ्यमेव नास्ति अथवा समर्थौ दत्त एव नहीति। नाद्यः, एकस्यानेकसंज्ञायां क्वचिदपि सामर्थ्यक्षीणत्वाभावदर्शनात्। जीववन्मायावशीभूतत्वात्तस्य मायापरत्वं हीयेच्च। तथा च श्लोके 'पर' इत्यस्य निष्फलतापत्तिः स्यात्। पुराणादौ तेषां मुक्तिदायकत्वं प्रसिद्धम् तच्च विरुध्येत्। "एष सर्वेश्वर अचिन्त्यमव्यक्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। "तथादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं

त्रिलोचनं नीलकंठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षी तमसः परस्तात्"। "स ब्रह्मा स शिवस्स हरिः"। इत्यादीनि उपनिषद्वाक्यानि सर्वाणि उपप्लवेयुः।

ब्रह्मादयो यत्कृतसेतुपाला,
यत्कारणं विश्वमिदं च माया।
आज्ञाकरी यस्य पिशाचचर्य्या,
अहो विभूम्नश्चरितं विडम्बनम्॥

इत्यादिभागवतमपि विरुध्येत्। नान्त्यः संकोचे प्रमाणाभावात्। पूर्वोक्तोपनिषद्वाक्यं, तत्तद्विषयकम्पुराणादिश्रुतिस्मृतिवाक्यमपि विरुध्येत्। तत्तत्प्रकरणवशात्तत्तदाधिक्यमिति तु न युक्तम्, भागवते एव शिवादीनामीश्वरत्वादिवर्णनात्। युक्तं तु स्वस्वकाले पंचदेवानां सृष्ट्यादिकर्तृत्वम्। तत्तत्पुराणादौ प्रसिद्धत्वात्। न हि वंदीजनवत् व्यासः किंचिद्गृहीतुकामः। एवं पञ्चानामैक्यं सिद्धम्।

प्रकरणम्—वक्तृश्रोतृबुद्धिस्थिता। यथा, 'सर्वं जानाति देवः' इत्यत्र देवशब्दस्य राजनि देवतायां च शक्तत्वान्नानार्थत्वम्। राजकुमारको देव इति कोशः। लिङ्गम्—संयोगातिरिक्तसम्बन्धेन पक्षव्यावृत्तो धर्मः। यथा, 'कुपितो मकरध्वजः' इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसम्बन्धवता कोपेन मकरध्वजस्य कामे। यत्तु लिंगं चिन्हमिति तन्न, सशंखचक्रो हरिरित्यत्रातिव्याप्तिप्रसंगा

दिति केचित् तदविचारिताभिधानम्। वयं तु ब्रूमः—लिङ्ग-सम्बन्धाभाववद्गृह्यते इत्याशयः। अभियुक्तवचने संयोग-पदस्य वैयर्थ्यापत्तेः। एवं कुपितो मकरध्वज इत्यत्रापि न दोषः। यत्तु कोपस्य कामचिन्हत्वाभावः कोपस्य साधारण-धर्मत्वात् असाधारणधर्मस्य चिन्हत्वादित्यपि मदीपकारः। तदपि तदेव कोपवदकोपवतोर्मध्ये कोपवतः कोपस्यापि चिन्हत्वात् कोपस्य तारतम्याद्वा कोपस्य चिन्हत्वात्। शब्द-स्यान्यस्य सन्निधिः—असाधारणार्थकशब्दसामानाधिक-रण्यम्। यथा, 'रामोरावणारिः' इत्यत्र रावणारिशब्द-सामानाधिकरण्याद्रामस्य दाशरथौ। सामर्थ्यं कारणत्वम्। यथा, 'मधुनामत्तकोकिलः' इत्यत्र मधुशब्दस्य वसंते—

मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः।
मधुर्दैत्यो मधुश्चैत्रो मधूकोपि मधुः स्मृतः॥

इत्यनेकार्थकोशान्मधुशब्दस्य मद्यादिषु शक्तत्वान्नानार्थत्वम्। औचिती—योग्यता। यथा, 'पातु मां भगवद्भक्तिः' इत्यत्र मनोरथसाधनयोग्यत्वेन भगवद्भक्तिशब्दस्य विष्णु-भक्तिभावे उत्कंठितमनोरथत्वात् भक्त्यभावस्यौचित्याभाव इति भावः। भगवद्भक्तिशब्दस्य इन्द्रादिभक्तौ शक्तत्वान्ना-नार्थत्वम्। इन्द्रादेरपि भगवच्छब्द वाच्यत्वात्। देशः—स्थानम्। यथा, 'अयोध्यायां स्थितो रामः' इत्यत्रायोध्या-स्थानाद्रामपदस्य दाशरथौ। कालः—समयः। यथा, 'वसंते

पत्रशातनम्' इत्यत्र वसंतसमयात्पत्रशब्दस्य वृक्षपत्रे । पत्रशब्दस्य वाहनपक्षयोश्शक्तत्वान्नानार्थत्वम् । 'पत्रं वाहनपक्षयो' रित्यनेकार्थकोशात् । व्यक्तिः--पुंस्त्वादि लिंगम् । यथा,-'हस्तो भासते' इत्यत्र पुल्लिंगाद्धस्तशब्दस्य करे । हस्तशब्दस्य नक्षत्रे शक्तत्वान्नानार्थत्वम् । इति पुल्लिङ्गोदाहरणम् । स्त्रीलिङ्गे यथा, 'चित्रा भासते' इत्यत्र स्त्रीलिङ्गाच्चित्राशब्दस्य चित्रानक्षत्रे । चित्र शब्दस्याद्भुते शक्तत्वान्नानार्थत्वम् । नपुंसकलिंगे यथा, 'मित्रं भासते' इत्यत्र नपुंसकलिङ्गान्मित्रशब्दस्य सुहृदि । मित्रशब्दस्य सूर्ये शक्तत्वान्नानार्थत्वम् । 'द्युमणिस्तरणिर्मित्रः' इत्यमरकोशात् ।

स्वर—उदात्तादिः । यथा, 'इन्द्रशत्रुर्वर्द्धस्व' इत्यत्रान्तोदात्ते इन्द्रस्य शत्रुश्शातयिता, आद्युदात्ते इन्द्र एव वृत्रस्य शत्रुः शातयितेति निष्पन्नः । एवमत्र षष्ठीतत्पुरुषसमासे अन्तोदात्तः । 'समासान्नोदात्त' इतिसूत्रात् । इन्द्रश्शातयिता यस्येति बहुव्रीहिसमासे आद्युदात्तः 'पूर्वपदप्रकृतिस्वरो बहुव्रीहिरितिसूत्रात् । अत्रेन्द्रशत्रुत्वस्य च विधेयत्वात्संबोधनविभक्तेरनुवाद्य विषयकत्वादिहाभाव इति । स्वरादय इत्यत्रादिपदादभिनयापदेशौ गृह्येते । अभिनयश्च—साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया । यथा, 'अस्याः स्तनौ विकसितौ मुकुलितौ' इत्यत्र विकसितमुकुलिताभिनय विशेषसाहित्येन स्तनस्य पीनत्वमुकुलितत्वाद्यर्थविशेषे । अपदेशः—अभिमतनिर्देशः । यथा—

इतस्स दैत्यः प्राप्तश्रीर्नैत एवार्हति क्षयम्।
विषवृक्षोपि संवर्द्धर्य स्वयं च्छेत्तुमसांप्रतम्॥

इत्यत्र इदम् शब्दस्य वक्तरि अभिधा नियम्यते। नियमनं नाम उपस्थितयोर्द्वयोरेकतरमात्रार्थविषयकशाब्दबोधजननम्। सत्यपि सम्बन्धग्रहे सशंखचक्रो हरिरित्यादौ संयोगादिज्ञानस्य तज्जनितप्रथमार्थतात्पर्यग्रहस्य वा प्रतिबंधकत्वान्न द्वितीयार्थस्मरणमिति भावः। नानार्थशब्दजशाब्दबोधे तात्पर्यनिर्णयस्य हेतुत्वात्। एवं उपस्थितयोर्द्वयोरेकतरमात्रार्थविषयकतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयशाब्दबोधजननमिति लक्षणं निष्पन्नम्। ननु विषवृक्षोपीत्यत्र विषवृक्षशब्दस्य कर्मत्वात्कर्मणि द्वितीयां इति द्वितीया स्यादितिचेन्न, साम्प्रतमिति निपातपदेन तस्योक्तत्वात्। 'क्वचिन्निपातेनाभिधानम्' इत्युक्तेः। साम्प्रतमित्यस्य हि न युज्यत इत्यर्थः। शब्दार्थस्येत्यादि—शब्दार्थस्यानवच्छेदे अनिश्चये संयोगादयो विशेषार्थस्य स्मरणहेतवो भवन्तीत्यर्थः। एवं संयोगादावभिधाया नियामकत्वेपि अनेकार्थकोशेनार्थान्तरस्य प्रतिपादनेन नियामकत्वमिति स्थितम्। इति शक्तिनिरूपणम्।

अथ लक्ष्यः पदार्थो निरूप्यते। तत्र लक्षणाविषयो लक्ष्यः। स्वशक्यसंबंधो लक्षणा। स्वपदेन लाक्षणिको गृह्यते। तस्य यच्छक्यं तत्संबंधो लक्षणेत्यर्थः। अत्र लाक्षणिकज्ञानोत्तरं लक्षणाबोधस्तद्ज्ञानोत्तरं लाक्षणिकबोध इत्य-

न्योन्याश्रयदोषः। समाधानं तु तस्या अनादित्वात् इन्द्रियादिवत्। अनादित्वे प्रमाणं तु वेदस्थलाक्षणिका एव। शक्यसंबंधेनाशक्यप्रतिपत्तिः लक्षणेति प्रांचः। अत्र लक्षणायाः प्रतिपत्तिहेतुत्वेन प्रतिपत्तिरूपत्वाभाव इति दोषः। वयं तु ब्रूमः—अशक्यस्य प्रतिपत्तिर्येन हेतुभूतेन सा लक्षणेत्यदोषः। सा द्विधा, केवललक्षणा लक्षितलक्षणा च। केवला चासौ लक्षणा चेति विग्रहः। शक्यस्य साक्षात्संबंधरूपः। यथा 'गंगायां घोषः' 'चन्द्रवन्मुखम्' इत्यत्र प्रवाहचन्द्रसाक्षात्तीरसादृश्ययोस्संबंधिनोः गंगापदस्य चन्द्रपदस्य संबंधः। सादृश्यं तु—तद्भगतभूयोधर्मवत्त्वम्। इयमेव शुद्धाभिधीयते। लक्षितपदस्य लक्षणा—लक्षितलक्षणा। शक्यपरंपरासम्बन्धेनार्थान्तरप्रतीतिरिति यावत्। यथा—'द्विरेफ कदम्ब' इत्युदाहरणम्। द्वौ रेफौ यत्रेति द्विरेफ इति बहुव्रीहित्वात् द्विरेफपदस्य क्रूरादिपदम्विहाय रूढ्या भ्रमरघटितपरंपरासंबंधेन मधुकरेषु वृत्तिरिति। इयमेव गौणी। यथा, 'सिंहो माणवकः' इत्यत्र माणवकस्य सिंहसंबंधिक्रौर्यादिसंबंधेन प्रतीतिः। इत्थं शुद्धा गौणी च व्याख्याता।

तत्र जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था, इति शुद्धाभेदास्त्रयः। जहत्स्वार्थाऽजहत्स्वार्थे एवान्यत्रोपादानलक्षणा लक्षणलक्षणा इत्युच्यते। तयोर्लक्षणं तु—

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥इति॥

अस्यार्थः—स्वसिद्धये स्वार्थस्यान्वयप्रवेशसिद्धये पराक्षेपः परलक्षणं स्वार्थपरित्यागेन परार्थलक्षणमुपादानमिति। ते अपि प्रत्येकं सारोपा, साध्यवसाना चेति द्विविधे। इति शुद्धाभेदाः पञ्च। गौणी तु द्विधैव सारोपा साध्यवसाना चेति सप्तविधा लक्षणा। तत्र क्रमेणोदाहरणानि। जहति स्वार्थं पदानि यस्यां सा जहत्स्वार्था। शक्यमनंतर्भाव्यर्थान्तरप्रतीतिरिति यावत्। यथा, 'विषं भुंक्ष्व' इत्यत्र स्वार्थं विषभोजनमित्रहाय, शत्रुगृहे भोजनं न कर्तव्यमिति भोजननिवृत्तिर्लक्ष्यते। न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था। शक्यार्थमन्तर्भाव्यैवार्थान्तर प्रतीतिरिति यावत्। यथा, 'शुक्लोघटः' इत्यत्र शुक्लगुणमन्तर्भाव्यैव शुक्लगुणवति द्रव्ये लक्षणा। अशक्यार्थव्यधिकरणशक्यार्थपरित्यागापरित्यागरूपेण अशक्यार्थप्रतीतिः जहदजहत्स्वार्था। यथा, 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र शक्यार्थस्य काकरूपस्य परित्यागापरित्यागअशक्यार्थदध्युपघातकस्य प्रतीतिः। काके एव काकशब्दस्य वृत्तिर्नत्वन्यत्रेति अशक्यार्थव्यधिकरणा इत्युच्यते। आरोपेण सहवर्तत इति सारोपा। सादृश्यतासम्बन्धेनारोप्यमाणार्थप्रतीतिजनिका। यथा, 'गौर्वाहीक' इत्यत्र वाहीके गवा भेदस्य बोधाद्गोपदेन जाड्यमांद्यादिकं लक्ष्यतावच्छेदकमारोप्य गोसदृशो लक्ष्यते। तथा च, जड़ो मंदश्च वाहीक इति शाब्दबोधः। अध्यवसानेन सहवर्तत इति साध्यवसाना। सा दृश्यतासंबंधेन उपमेयभूतार्थलोपप्रतीतिजनिका। अध्यवसान-

श्चोपमार्थेनोपमेयस्य तिरोभावः। यथा, 'गौरयम्' इत्यत्रोपमेयभूतस्यायमित्यस्योपमाभूतगोविशेषणत्वम्। इति गौण्या एव द्वौ भेदौ। तदुक्तम् :—

अभिधेया विना भूतप्रवृत्तिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥

अभिधेयसम्बन्धभूता चासौ प्रवृत्तिस्तात्पर्यद्वारा प्रतीतिस्सा लक्षणेत्यर्थः। लक्षणायास्तात्पर्यहेतुकत्वात्। अभिधाया विषयोऽभिधेयः। अविनाभूत इत्यस्य संबंध इत्यर्थः। लक्ष्यमाणगुणैरिति लक्ष्यमाणा ये गुणा गोगतजाड्यमांद्यादयस्तैर्योगात्संबंधात् वृत्तेर्गौणतेष्टा इत्यर्थः। वृत्तित्वं च संकेतसंबंधेन वृत्तिपदवत्त्वम्। सा वृत्तिस्त्रिधा, शक्तिः लक्षणा व्यञ्जना च। शुद्धा सारोपा तु सादृश्यान्यसंबंधप्रतीतिजनका। यथा 'आयुर्घृतम्' इत्यत्र दीर्घकालजीवनजनकत्वं च संबंधस्स एव लक्ष्यतावच्छेदकम्। शुद्धा साध्यवसाना तु सोयमिति नियतार्थकपदसामानाधिकरण्यप्रतीतिजनका। यथा 'आयुरेवेदम्' इत्यत्र पदसामानाधिकरण्यं तदेव लक्ष्यतावच्छेदकम्। सा लक्षणा पुनस्त्रिविधा,—अव्यंग्या, गूढव्यंग्या, अगूढव्यंग्या चेति। लक्षणाया व्यंग्यफलत्वात्। व्यंग्येनरहिता अव्यंगा साचोक्ता। काव्यभावनापरिपक्वबुद्धिस्सहृदयस्तन्मात्रवेद्यं गूढम्। गूढं व्यज्यते प्रकाश्यते यया सा गूढव्यंग्या। यथा :—

मुखम्विकसितस्मितम्वशितवक्रिमप्रेक्षितम् ।
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ॥
उरो मुकुलितस्तनं जघनमंसबंधोद्धुरं ।
वतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥इति॥

अस्यार्थः—वतेतिहर्षे । इन्दुरिव वदनं यस्याः सा इन्दुवदना, तस्यास्तनौ तरुणिमाया अवस्थाया उद्गमः स्तनादिव्यंग्यप्रकाशः स नयनाह्लादकत्वेन मोदते आनंदं प्राप्नोति तिष्ठतीति यावत् । तदेव दर्शयति मुखमित्यादि । विकसितं स्मितमीषद्धासो यस्मिन् तादृशं मुखमस्ति। वशितं वशीकरणवक्रिमप्रेक्षणं कटाक्षव्यापारवदीक्षणम् । समुच्छलितो विभ्रमो विलासो यस्यां सा। एतादृशी गतिः विलासपूर्वकं गमनमित्यर्थः। अपास्ता दूरीकृता संस्था—एकविषयसंचारिता यस्यां तादृशी मतिः। मुकुलितमुद्भिन्नं स्तनं यस्मिन् तादृशमुरो वक्षस्थलम्। अंसबंधस्योद्धुरं उद्गतभारं यस्मिन्तादृशं जघनम् । अस्तीति क्रिया सर्वत्राभिसंधेया। अत्र विकाशस्य पुष्पधर्मत्वेन स्मिते अनुपपन्नत्वाद्विकाशपदेन मुखस्य प्रसृतत्वं लक्ष्यते। तेन च लोकोत्तर रमणीयतातिशयो व्यज्यते, स च गूढः। एवं, वशितसमुच्छलितापास्तसंस्थामुकुतोद्धुर मोदते शब्दैरायतत्वोल्लासितत्वानेकविषयसञ्चारित्वोद्भिन्नत्वायोग्यत्वानियंत्रितत्वानिलक्षयद्भिर्युक्तानुरागित्वसकलवशीकारित्वानुरा-

गातिशयालिंगनयोग्यत्वरमणीयत्वस्पृहणीयत्वानि गूढानि व्यज्यन्ते। अगूढव्यंग्या यथा :—

श्रीपरिचयाज्जड़ा अपि
भवन्त्यभिज्ञा विदग्धचरितानां।
उपदिशति कामिनीनां
यौवनमद एव ललितानि ॥ इति ॥

अस्यार्थः—श्रीपरिचयात् श्रियो लक्ष्म्याः परिचयस्संपर्कस्तस्माद्धेतोः जड़ा अनभिज्ञा अपि अभिज्ञाः अभि सर्वतो जानातीति, अभिज्ञा ज्ञानवन्तो भवन्तीत्यर्थः। अथ, विदग्धानि चरितानि यासां तासां कामिनीनाम् विशेषस्त्रीणां यौवनेन यो मदस्स एव ललितानि मनोहरचरितानि उपदिशत्याविष्करोतीत्यर्थः। अत्रोपदेशकत्वस्य मदे अमूर्तिपदार्थेऽनुपपन्नत्वादुपदेशपदेन आविष्कारो लक्ष्यते। तेन च अनायासेनैव शिक्षादानं व्यज्यते। तच्च सहृदयासहृदयोरुभयोरप्यभिधेयवत्प्रकाशते।

अत्र केचित्—शक्यादशक्योपस्थितिर्लक्षणा। गंगापदेन शक्त्या प्रवाहोपस्थितौ, तत्र चान्वयानुपपत्तिप्रतिसंधानानन्तरं गंगापदात्पुनः स्मृतेन प्रवाहेणैकसंबधिज्ञानस्यापरसंबंधिस्मारकतया स्वसंबंधितीरमुपस्थाप्यते। सैवोपस्थितिर्लक्षणेतिभावः इत्याहुः। यथा 'गंगायां घोषः' इत्यत्र शक्यात्प्रवाहरूपादशक्यस्य तत्संबंधिनस्तीरस्य उपस्थिति-

स्सैव लक्षणेत्यर्थः । तन्न वृत्तेरुपस्थितिहेतुत्वेनोपस्थितिरूपत्वाभावादित्यन्ये । वयं तु ब्रूमः शक्यादशक्योपस्थितिरित्यस्य शक्यादशक्यस्य उपस्थितिर्येन हेतुना भवति, सैव लक्षणा इत्यन्यपदार्थो बहुव्रीहिर्विवक्षितो न तु षष्ठीतत्पुरुषः । तथा च, वृत्तेरुपस्थितिहेतुत्वं नतूपस्थितिरूपत्वम् । एवं तन्मतखंडनकाराः प्रत्युक्ताः । अशक्ये तात्पर्यं लक्षणेत्यन्ये । गंगापदाशक्ये तीरे तात्पर्यम् तन्न, घटमानयेत्यादौ घटकर्मत्वयोराधेयत्वरूपसंसर्गे तात्पर्यसत्वाल्लक्षणात्वं स्यात् । नचेष्टापत्तिः अन्वयेन शक्तिर्न वा लक्षणेतिसिद्धांतव्याघादित्याहुः । वयं तु ब्रूमः शक्यादशक्ये वाक्यस्य तात्पर्यं लक्षणेत्यर्थो विवक्षितः । अशक्येत्यनेन शक्यं स्मार्यते । वाक्यस्येति तु सापेक्षत्वाल्लभ्यते । गुरुकुलमित्यत्र देवदत्तस्येतिवत् । यथा च गंगायां घोष इत्यत्र वाक्यस्य तीरे तात्पर्यसत्वाल्लक्षणात्वं, न हि घटमानयेत्यादिस्थले आधेयत्वरूपसंसर्गे तात्पर्यसत्वेपि वाक्यस्य तात्पर्यम् ।

न च व्यंजनायां दोषः तस्याः लक्षणामूलफलत्वात् । यत्तु तत्त्वमसीत्यादौ तत्पदवाच्यसर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येनांतःकरणविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं जहदजहल्लक्षणा सांप्रदायिका आहुस्तदभ्युपगम्यवादे बोध्यम् । तदुदाहरणं तु 'काकेभ्यो दधि रक्ष्यताम्' इति बोध्यम् । एवं जहदजहल्लक्षणा सिद्धा । एतेन जहदजहल्लक्षणाभेदो न जहत्स्वार्थापदेनैव तत्संग्रहादिति तत्खंडनकाराः प्रत्युक्ताः ।

अपरे तु तत्त्वमसीत्यादौ न लक्षणा, शक्त्या स्वातंत्र्येणोपस्थितयोस्तत्त्वम्पदार्थयोरभेदान्वये बाधकाभावात्। अन्यथा 'गेहे घटः' 'घटे रूपम्' 'घटमानय' इत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया, तत्रापि घटादिपदानां विशेष्यमात्रपरत्वंलक्षणा च स्यादित्याहुः। लक्षणाबीजं तु तात्पर्यानुपपत्तिर्नत्वनन्वयानुपपत्तिः। 'यष्टीः प्रवेशय' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादिस्थले अन्वयानुपपत्त्यभावादिति दिक्। इति लक्षणानिरूपणम्।

अथ व्यंग्यो निरूप्यते। व्यंजनाविषयो व्यंग्यः। व्यंजना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकश्शब्दनिष्ठो व्यापारः। विगतमंजनं शक्तिलक्षणाविषयोर्थो यस्यां स व्यंजना। शक्तिलक्षणामूलकेति भावः। अत्रायम्विवेकः, व्यंजना द्विधा—शब्दनिष्ठा अर्थनिष्ठा च। आद्या तु द्विधा, शक्तिमूला लक्षणामूला च। शक्तिर्मूलं कारणं यस्यास्सा, लक्षणा मूलं कारणं यस्यास्सा। यत्र शक्तेर्लक्षणायाश्च न व्यापारस्तत्र व्यंजनमेव व्यापारः। शक्तिमूला यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
　वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य,
　दानाम्बुसेकशुभगस्सततंकरोऽभूत् ॥इति॥

अस्यार्थः—यस्य परवारणस्य परे शत्रवस्तान् वारय-

तीति परवारणो राजा, तस्य करो हस्तो दानाम्बुसेक-शुभगः अभूत्। स्वत्वनिवृत्तिपूर्वकम्परस्वत्वोपादानं दानं, तत्संबंधि यदम्बु जलं तस्य यस्सेकः सेचनं तेन हेतुना शुभगश्शुभं प्राप्तः सोयम्। गजपक्षे परस्सर्वगजोत्कृष्टो वारणो गजस्तस्य करश्शुंडादंडो दानाम्बुसेकशुभगोऽभूदित्यर्थः। किम्भूतस्य राज्ञः भद्रात्मनः भद्रं कल्याणं तेन युक्तः आत्मा यस्य "श्वः श्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम्। भावुकं भविकम्भव्यं कुशलं क्षेममस्त्रियाम्" इत्यमरः। अष्टदिक्पालात्मकत्वात् पश्यतां शुभदायकस्येत्यर्थः। यद्वा स्रक्चंदनादियुक्त आत्मा यस्य 'राजा दृष्टव्यो न तु स्पर्शनीयः' इति पुराणादौ श्रूयते। गजपक्षे मंगलयुक्तो आत्मा यस्य। पुनः किम्भूतस्य दुरधिरोहतनोः रोहणं रोहः दुःखेन अधिरोढुं शक्यं तनुश्शरीरं यस्य, तेजोयुक्तत्वात्परमायासेनाधिगम्यस्येत्यर्थः। दुर्द्धर्षशरीरस्येतिवा। गजपक्षे—दुःखेन अधिरोढुं शक्यं तनुर्यस्य विनायत्नेनाधिरोढुमशक्यस्येत्यर्थः। पुनः किम्भूतस्य विशालवंशवदुन्नतिर्यस्य दर्शनीयप्रांशुशरीरस्येत्यर्थः। यद्वा विशालस्य मनोहरवंशस्य संततेरुन्नतिर्यस्य मनोहरवंशे उन्नतिराधिक्यं यस्येति वा। गजपक्षेपि स एवार्थः। पुनः किम्भूतस्य कृतशिलीमुखसंग्रहस्य, कृतश्शिलीमुखानां वाणानां संग्रहस्संचयो येन तस्य धनुर्विद्याकुशलस्येति भावः। क्षत्रियाणां धनुर्विद्याकुशलत्वं युक्तमेव। गजपक्षे कृतश्शिलीमुखानां संग्रहो यस्मिन् तस्य चतुर्दिक्षुवाणाधारशरीरस्येत्यर्थः। पुनः

किम्भूतस्य अनुपप्लुतगतेः अनुपप्लुता न नष्टा गतिर्गमनं यस्य स्वेच्छागमनस्येत्यर्थः। गजपक्षे अतिमनोहरगमनस्य शीघ्रगतेरिति वा। इतिश्लोकार्थः।

नानार्थस्थले 'सैन्धवमानय' इत्यादौ प्रकरणस्य अभिधा-नियामकत्वात् यात्रासमये अश्वस्यैवोपस्थितिर्न तु लवणस्य। यत्रोभयोरन्वययोग्यता तत्र रूढिजन्योपस्थितिरेव, न तु योगार्थस्य। 'रूढिर्योगमपहरति' इति न्यायात् रूढिजन्यो-पस्थितेर्योगार्थान्वयस्य प्रतिबंधकत्वात्। यथा 'पङ्कजम्' इत्यत्र समुदाये रूढिस्वीकारः पङ्काज्जायत इति पङ्कजमिति। पङ्कजनिकर्तृतया यौगिकः। तत्रोक्तन्यायात्पद्मस्योपस्थितिर्न तु कुमुदस्य। यत्तु यत्रोभयोरन्वययोग्यता 'मंडपम्पश्य' इत्यादौ तत्रापि रूढिर्योगापहारितेत्यूचुर्वैयाकरणनव्याः, तन्न तत्र योगार्थ एव प्रकरणसत्वेन योगार्थस्यैव प्राबल्या-दित्यपरे इत्यलम्।

प्रकृतमनुसरामः। अत्र तु प्रकरणेन शक्त्युपस्थिते राज्ञि भद्रात्मन इत्यादिपदानामन्वययोग्यत्वमपि, तथापि व्यंजन-यैव गजे अन्वययोग्यार्थस्य प्रतीतिः। नन्वेकशब्दोपस्थि-तार्थद्वयस्यान्तरङ्गत्वात् परस्परभेदान्वयपूर्वकमेव वाक्यार्थ-बोधः किं व्यंजनयेति चेन्न, यत्र द्वयोरर्थयोः परस्परान्वय-म्विना इतरान्वयानुपपत्तिस्तत्रैवोक्तवाक्यार्थबोधः। अत्र तु एक एवार्थश्शब्दनिष्ठव्यापाराद्द्वितीयार्थप्रतिपत्तिरिति सिद्धा व्यंजना। लक्षणामूला यथा, 'गंगायां घोष' इत्यत्र

घोषाधिकरणस्य गंगापदस्य बाधात् गंगाशब्दो लक्षणया तीरं लक्षयति। गंगागतशैत्यपावनादिकं तु व्यंजनयैव प्रतीयते इति। न च गंगाशब्दस्तीरविशिष्टं शैत्यपावनादिकं लक्षयेदिति तद्विशिष्टमेव लक्ष्यतावच्छेदकं किं व्यञ्जनयेति वाच्यम्, एवं गंगातटे घोष इति प्रतीतस्य शक्यतावच्छेदकत्वेनैव संग्रहाल्लक्षणोच्छेदापत्तेः। एवं सर्वत्र बोध्यम्। तथा च 'तटे घोष' इति लक्षणयोपस्थिते सति पावनत्वादि विशेषस्य व्यंजनयैव प्रतीतिरिति व्यंजनावश्यं स्वीकार्या। पावनत्वादेश्शक्तिलक्षणाभ्यामतिरिक्तव्यापारगम्यत्वात्। तयोः प्रागेव निरस्तत्वात्तात्पर्यस्य च संसर्गबोधमात्रजनकत्वादितिभावः। इति शब्दनिष्ठा व्यंजना निरूपिता।

अर्थनिष्ठा यथा,—अर्थस्यान्यार्थधीहेतुर्व्यापारोऽर्थव्यंजना। यथा—

तथाभूतां दृष्ट्वा नृपसदसि पांचालतनयां
बने व्याधैस्साद्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारंभनिभृतम्
गुरुं खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

अस्यार्थः—मया नृपस्य दुर्योधनस्य सदसि सभायाम्पाञ्चालतनयां द्रौपदीं तथाभूतां केशाकर्षणादिना विह्वलां दृष्ट्वा, वल्कलानि बिभ्रति ये ते वल्कलधरास्तैर्व्याधैः प्राणिहिंसकैस्साद्धं बने सुचिरं बहुकालमुषितं वासं कृतम्। तथा

विराटस्य राज्ञ आवासे गृहे स्थितम्। तथा, अनुचितारंभ निभृतम् अनुचितमयोग्यं यदारंभं कार्यारंभं तन्निभृतं स्वीकृतम्। एवं खेदं खिन्ने दुःखं मयि भजति सति अद्यापि कुरुषु कुरुवंश्येषु दुर्योधनादिषु नेति प्रश्नः। अत्र खेदं मयि भजति नाद्यापि कुरुष्विति काकोर्वैशिष्ट्यान्मयि न योग्यं कुरुषु पुनर्योग्यं दुःखमिति व्यज्यते, इति दिक्।

अत्र नैयायिकाः—लक्षणयैव तदर्थसिद्धेः किं व्यञ्जनया? लक्षणायां तात्पर्यानुपपत्तेर्बीजे सति गच्छ गच्छसीत्यत्रापि कांतगमनाभाव एव तात्पर्यविषयः। तदन्वयानुपपत्त्या गमनबोधकस्य गच्छ गच्छसीतिपदस्य गमनाभावो लक्षणयैवोपपत्तौ नातिरिक्तवृत्त्यन्तरकल्पनं गौरवात्। एवं लक्षणामूला व्यंजना न स्वीकार्य्या। एवं नानार्थस्थले अर्थान्तर प्रतीतेश्शक्यतावच्छेदकत्वाच्छक्त्यैव निर्वाहे शक्तिमूलापि व्यंजना न स्वीकार्या। एवं न प्रकरणस्याभिधानियामकत्वं तात्पर्यग्रहस्यैव सत्त्वात्। तथाच व्यंग्येपि तात्पर्यग्रहस्यापेक्षितत्वात् गंगायां घोषः इत्यादौ शैत्यपावनादिकमेव प्रतीयते न केशवालुकादिप्रत्यम्। यदि सहृदयानां वासनाविशेषादेव शैत्यादिप्रतीतौ केशवालुकानां निषेधस्तर्हि लक्षणास्थलेपि गंगायां घोष इत्यादौ तेषां वासनाविशेषपरिपाकादेव तटे घोष इत्यादिप्रतीतौ तात्पर्यग्रहस्य कारणता न स्यादित्याहुः। तन्नसत्, इदम्पदमेतस्य न वाचकम् नापि लक्षकमपि तु व्यंजनया बोधकमित्यादिप्रामा-

णिकव्यवहारादुक्तयुक्तेश्च । एवं व्यंजनावश्यं स्वीकार्या। चेष्टास्थले तज्जन्यबोधम्प्रति तज्ज्ञानस्य कारणत्वम् । न च बोधकत्वाच्छक्तिराश्रीयते प्रामाणिकव्यवहाराभावात् । केचित्तु, तत्तद्वाचकशब्दस्मरणद्वारा चेष्टया अर्थबोधः । एडमूकादीनां तु जन्मान्तरीयशब्दस्मरणद्वारैव बोधादित्याहुः । इति व्यंजना निरूपणम् ।

अथ प्रसंगाच्छाब्दबोधप्रक्रिया निरूप्यते । शब्दस्यायं शाब्दस्सचासौ बोधश्चेति विग्रहः । बोधश्च प्रकृतिप्रत्ययादितदन्वययोग्यतानाम् । बोधं च—"यद्यदाकांक्षितं योग्यं सन्निधानम्प्रपद्यते, तेन तेनान्वितस्स्वार्थः पदैरेवावधार्यताम्" इति वचनानुग्राहिक राजपुरप्रवेशन्यायेन केचनाहुः । तथाहि, प्रथमं घकारज्ञाने सति तदुत्तरमकारज्ञाने जायमाने स्वाव्यवहितोत्तरत्वसंबंधेन घकाराकारौ टकारे विशेषणं सोपि पूर्वद्वयविशिष्टस्स्वोत्तरस्मिन्निति भवति पदज्ञानम् । तस्मात्पदार्थोपस्थितिः । तत उक्तप्रकारेण पदांतरज्ञानं । ततस्तदर्थोपस्थितौ तयोः परस्परमन्वयबोधः । पुनः पदान्तरज्ञानं ततः पदार्थोपस्थितिः तस्याप्यन्वयबोध इत्येवं क्रमेणावान्तरवाक्यार्थज्ञानपूर्वको महावाक्यार्थबोधः । अन्ये तु 'खले कपोत न्यायेन' इत्याहुः । यथा, खले कपोतास्तावत्सहैव पतंति, एवं सर्वेषां पदानां प्रथमं प्रत्यक्षज्ञानं तस्मात्सर्वेषाम्पदानां समूहालंबनरूपज्ञानं ततस्तदर्थानामपि समूहालंबनरूपोपस्थितौ सत्यां, पुनः प्रथममेव महावाक्यार्थबोधः ।

सोऽयं शाब्दबोधश्चतुर्द्धा। विशेष्ये विशेषणम्, विशिष्टस्य वैशिष्ट्यावगाही, एकत्रद्वयमिति न्यायेन, एकविशेषणविशिष्टे विशेषणान्तर वैशिष्ट्यावगाही। तत्र क्रमेणोदाहरणानि—यथा 'रक्तदण्डवान्' इति पुरुषे दण्डस्तत्र रूपम्विशेषणम्। द्वितीयं यथा, रक्तदण्डवानिति रक्तत्वविशिष्टस्य दण्डस्य वैशिष्यबोधः। तृतीयं यथा, 'दण्डो कुंडली देवदत्तः' इति एकत्र देवदत्ते दण्डित्वं कुंडलित्वं च। चतुर्थो यथा, 'खड्गी शूरः' इति अत्र एकविशेषणं खड्गित्वं तद्विशिष्टे शूरे विशेषणान्तरं शूरत्वं तदवगाही। एवं 'नीलो घटः' इत्यत्र नीलत्वादिगुणविशिष्टघटाभिन्नाश्रयनिष्ठभवनानुकूलवर्तमानो व्यापार इति बोधः। नामार्थयोरभेदान्वयाबाधात् सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः। सति विशेष्ये बाधे इति न्यायात् विशेषणे नीलएव भवनस्यान्वयो भविष्यति। एतेन नीलो घटो भवतीति वाक्ये नीलकर्तृकभवनाश्रयो घट इति नैयायिकोक्तमसत्। प्रथमान्तविशेष्यकबोधन्त्वग्रे खण्डयिष्यामः। एवं 'रामः सुन्दरः' इत्यत्र रामाभिन्नः सुन्दर इति बोधः। रामाभिन्ने विशेष्ये सुन्दरत्वस्य विशेषणत्वम्। अत्र प्रकृत्यर्थानुवादिका विभक्तिस्सा द्योत्या वाच्या वा।

'द्योतिका वाचिका वा स्यु-
र्द्वित्वादीनां विभक्तयः' इत्युक्तेः।

अभेदश्च संसर्गः। लिंगं प्रातिपदिकार्थः। जातिव्यक्ति-

लिंगसंख्याकारकाणीति प्रातिपदिकस्यैवार्थः । तदुक्तं हरिणा, 'एकं द्विकं त्रिकं चाथ चतुष्कम्पंचकं तथा, नामार्था इति सर्वेऽमी पक्षाश्शास्त्रनिरूपिताः' । विभक्तीनां प्रकृत्यर्थानुवादकत्वेनाश्रयोर्थः । तथा हि द्वितीयातृतीयासप्तमीनामाश्रयोर्थः । अवधिः पञ्चम्यर्थः । उद्देश्यश्चतुर्थ्यर्थः । संबंधः षष्ठ्यर्थः । षण्णांकारकाणां शक्तिरर्थः ।

'सुपां कर्मादयोप्यर्थास्संख्या चैव तथा तिङाम्
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च' ।

इति भाष्योक्तेः । क्रियाकारकयोरभिसंबंधस्य द्वितीया वाचिका भवतीति समर्थसूत्रे अनभिहितसूत्रेगुणस्साधनमिति च भाष्योक्तेः । विभक्तेर्वाच्यं कर्मादिकं स्पष्टमेव । 'कर्मत्वाशक्तिरेवाभिसंबंधशब्देन विवक्षिता' इति कैयटेन च व्याख्यातम् । अत्रायम्विवेकः —कर्तृतृतीयाया आश्रयोऽर्थः । स्वतंत्रः कर्ता स्वातंत्र्यं च धात्वर्थव्यापाराश्रयत्वम् । क्रियाफलयोर्धातुनैव लाभादाश्रयमात्रं तृतीयार्थः । 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायात् । करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ ।

'क्रियाया परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम्' ॥

इति वाक्यप्रदीपात् । शेषषष्ठ्यास्संबंधमात्रम् कारकषष्ठ्यास्तु शक्तिरेव । सप्तमीपंचम्यौ कारकमध्ये इति सूत्रे

शक्तिः कारकमिति भाष्योक्तेः। नैयायिकास्तु—द्वितीयाया विषयतायां लक्षणा इत्याहुः। तदुक्तम्भाष्यविरोधादुपेक्ष्यम्। एवं 'घटमहं जानामि' इत्यत्र घटाभिन्नाश्रयकर्मकसन्निष्ठ-ज्ञानानुकूलवर्तमानो व्यापार इति बोधः। एवं सर्वत्र। यत्र क्रिया न श्रूयते तत्राध्याहारो बोध्यः। 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीस्ति' इति भूवादिसूत्रस्थभाष्यात्। अस्तिर्नाम अस् धातुः भवन्तीपरः नाम लट् परः प्रयोक्तव्यः इत्यर्थः। भवन्तीति लटस्संज्ञा। अतएव 'नित्यो घटः' इत्यादौ घटादिपदानां घटत्वादिजातावन्वये विवक्षितेऽसाधुत्वं तस्य पदार्थैकदेशत्वाच्च इत्याहुः।

एवमाख्यातफलव्यापारौ धातुवाच्यौ। 'भूवादिसूत्रस्थ-क्रियावचनो धातुः' इतिवार्तिकस्य 'कर्मवत्कर्मणा' इति सूत्रस्य च स्वरसात्। आश्रयमात्रं तिङर्थः। फलव्यापार-योर्धातुलभ्यत्वान्न तयोस्तिङः शक्तिः। अनन्यलभ्यो हि शब्दार्थ इति न्यायात् तत्र फले व्यापारस्य प्राधान्यम्। तिङर्थः कर्तृकर्मसंख्या कालाः विशेषणम्। तत्र कर्तृकर्मणी व्यापारफलयोर्विशेषणे। संख्या तु कर्तृप्रत्यये कर्तरि कर्म-प्रत्यये कर्मणीति विवेकः। कर्तुराश्रये अभेदेन संबंधः। एवं 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति यास्कोक्तेर्भावस्य प्राधान्यत्वम्। पचादयः क्रिया भवति क्रियाया कर्त्र्यो भवन्तीतिभूवादिसूत्रस्थक्रियाविशेष्य-बोधकभाष्याच्च। भावशब्दः क्रियावाचकः। क्रिया नामेय-

मुत्पन्नापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिंडीभूतानि दर्शयितुमिति । वाक्यप्रदीपे च—

यावत्सिद्धमसिद्धम्वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥इति॥

साध्यत्वं च क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपत्वम् । क्रिया द्विविधा—सिद्धरूपा, साध्यरूपा च । कृदन्ते सिद्धरूपा आख्याते साध्यरूपा । कारकाद्यनन्वयित्वं सिद्धरूपत्वमिति वा । कारकाद्यन्वयित्वं सिद्धरूपत्वम् । एवं च 'राम मां पाहि' इत्यत्र रामाभिन्नाश्रयसम्बोधनकर्तृकमत्कर्मकं रक्षणमिति बोधः । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति त्वाख्यातातिरिक्तविषयम् । वस्तुतस्तु प्रकृतिप्रत्यर्थयोरिति वचनं भाष्यविरोधात्संख्याकालयोर्व्यभिचारात्प्रधान प्रत्ययार्थवचनमितिसूत्रकृता प्रत्याख्यातत्वादुपेक्ष्यम् । एतेन प्रत्ययार्थवचनप्रधानमितिविशेषवचनेनाख्यातार्थभावनाप्राधान्यविधानात् वैयाकरणमतमसंगतमिति केषांचिदुक्तिः परास्ता व्याख्यातृणामनुभवकलहे आर्षानुभव एव नियामक इति स्वयमेवाभ्युपगमात् । आश्रयत्वं चाखण्डशक्तिरूपमवच्छेदकं बोध्यम् ।

न च फलव्यापारयोर्धातुलभ्यत्वात्तिङः कर्तरि शक्तित्वाल्लः कर्मणि च भावेचाकर्मकेभ्य इति सूत्रं कथं संगच्छत इति वाच्यम्, तिबादिशक्तेर्लकारे प्रकल्पितत्वात् एवमादेशा वाचका न तु स्थानीतिदिक् । न च फलव्यापारयोर्धातु

लभ्यत्वेपि तिङस्तदंशे शक्तिरस्तु ? तथा च फलव्यापार यो-रेकशक्तावेकदेशत्वात् 'ओदनं पचति, ग्रामं गच्छति' इत्यादौ फलस्य पदार्थान्तरान्वयो न स्यात्। पदार्थः पदार्थेनान्वेति नत्वेकदेशेनेति व्यापार एव तिङ्शक्तिर्नतु फलांशे। एवं च लकाराणां कृतौ शक्तिम्मन्यमाना नैयायिकास्साधवः। अनन्यलभ्यो हि शब्दार्थ इत्यस्य तु लक्षणालभ्येऽर्थे शक्ति-कल्पनमन्याय्यम् इत्यर्थादितिशब्दे शक्तिस्वीकारो नतु वन्हाविति वाच्यम्, संसर्गमर्यादया सिद्धे शक्तिकल्पन-मयुक्तमित्येव तदर्थात्। भूवादिसूत्रस्थभाष्यात्फलव्यापार-योर्धातुवाच्यत्वे तद्विशिष्टे केनाप्यवारणाच्च। अतएव फलमेव धात्वर्थः व्यापारः प्रत्ययार्थ इति फलव्यापारयोः पृथगेव शक्तिरिति मंडनमिश्राः।

न च कर्तृकर्मणोस्तिङ्शक्तिर्मास्तु 'येन विना यदनु-पपन्नं तत्तेनाक्षिप्यते' इति न्यायेन कर्तारम्विना व्यापारा-संभव इति तेन कर्ताक्षिप्यते। 'लः कर्मणि' इति सूत्रेण तु लकारस्यैव वाचकत्वकथनाद्बोधकत्वरूपतिवादिशक्तेः तत्स्थानित्वेन कल्पिते लकारे प्रकल्पनायाम्प्रमाणाभावादिति वाच्यम्। एवं व्याख्यातुमशक्यत्वात्। तथाहि, तिङः शक्तिः कुत्र, यद्यपि आक्षेपस्य संभवस्तथापि अन्यलभ्यत्वा-त्तिङः फलव्यापारयोश्शक्तेरभावात्सा कर्तृकर्मणोरेव विश्राम्यति। लः कर्मणीतिसूत्रस्वरसाच्च कल्पितलकारे कर्त्रा-दिवाचित्वमादाय सूत्रकारः प्रवर्तते। अयमेवाभिप्राय-

स्सूत्रकारस्य । एवमाश्रयमात्रं तिङर्थ इति सिद्धम् । तथा च 'पचति भवति पश्य मृगो धावति' इत्यत्र देवदत्तकर्तृक-पचिक्रियायाः वर्तमानभवनक्रियायामन्वयः । मृगकर्तृकवर्त-मानधावनक्रियाया दृशिक्रियायां कर्मतासंबंधेनान्वयः । एवं देवदत्तकर्तृकपचिक्रियाभवनानुकूलतन्निष्ठो वर्तमानो व्या-पारः । मृगाभिन्नाश्रयकर्तृकधावनव्यापारविषयकं त्वद्-भिन्नाश्रयकर्त्र्यभिन्नाश्रयनिष्ठदर्शनानुकूलवर्तमानो व्या-पार इति शाब्दबोधौ । तदुक्तम्—

सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥

तथा च कर्तृप्रकारकक्रियामुख्यकशाब्दबोधे धातुजन्योप-स्थितिः कारणमिति कार्यकारणभावो द्रष्टव्यः । अत्र नैयायिकाः पश्य मृगो धावतीत्यादौ वर्तमानधावनानुकूल-कृतिमन्मृगकर्मकदर्शनाश्रयत्वांस्त्वमिति प्रथमान्तमुख्य-विशेष्यक एव बोधः । न च कर्तुः प्राधान्ये दृशिक्रियाम्प्रति तस्य कर्मत्वेनानभिहिताधिकारीयकर्मणि द्वितीयेति सूत्रेण द्वितीयापत्तौ पश्य मृगं धावतोत्यनिष्टापत्तिः । वैयाकरणमते च व्यापारस्य प्राधान्येन तस्य दृशिक्रियाम्प्रति कर्मत्वेपि धातुतिङन्तयोरप्रातिपदिकत्वात् धातूपस्थाप्यतया न प्रातिपदिकाधिकारीयकर्मणि द्वितीयेति सूत्रेण द्वितीयापत्ति-रिति वाच्यम्, परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात् । अन्यथा 'चैत्रो ग्रामं गच्छति' इत्यत्र धातूपस्थाप्यफलाश्रयस्य

कर्मत्वात्संयोगादिरूपफलस्योभयनिष्ठत्वात्तदाश्रयस्य ग्राम-स्य यथा कर्मत्वं तथा तदाश्रयस्य चैत्रस्यापि कर्मत्वे कर्मणि द्वितीयेति सूत्रेण द्वितीयापत्तिर्दुर्वारैव ।

न च लटश्शतृशानचावप्रथमा समानाधिकरणे इति सूत्रेण लटश्शत्रादेशे 'धावंतं मृगम्' इत्येव स्यादिति वाच्यम्, मृगस्य प्रथमांतत्वेनाप्रथमासमानाधिकरण्याभावात् । किं च पश्य मृगो धावतीत्यत्रवर्तमानधावनानुकूलकृतिमन्मृग-विशिष्टवाक्यार्थस्य कर्मत्वम् । तथा च पश्य मृगो धावतीति समुदायस्य प्रातिपदिकत्वाभावान्न द्वितीया । तथा च 'कृत्तद्धितसमासश्च' इत्यत्र भाष्यम्—समासग्रहणं किमर्थम्? समासग्रहणे उक्तम् किमुक्तम्? अर्थवत्समुदायानां समास-ग्रहणं नियमार्थमिति तच्चार्यैरपि व्याख्यातम् । पूर्वसूत्रेणसिद्धे समासग्रहणं नियमार्थम् । कीदृशो नियमः यत्र संघाते पूर्वो भागः पदं चेत्तस्य भवति, तर्हि समासस्यैव । तेन 'राज्ञः पुरुषः' इत्यादिवाक्यस्य न राजपुरुष इत्यस्यैवेति । तस्मात्प्रातिपदिकत्वाभावात्तदुज्जीव्याया द्वितीयायाश्शंकैव नास्तीत्यवसेयम् ।

अपि च, अन्तरङ्गजातसंस्कारमृगपदोत्तरं प्रथमोत्पत्तौ वहिरंग पश्यक्रियानिरूपितस्य कर्मत्वेप्यन्तरंगजातसंस्का-रस्य न वाधः । 'भुक्तवान्देवदत्तो न निवर्तते' इति न्यायात् । एवं 'पचति भवति' इत्यत्र पचिक्रियाभवनानुकूलव्यापारा-श्रयोदेवदत्त इति बोधे न कश्चिद्दोषः । प्रथमांतविशेष्यकबोधे

प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति प्राचीनवैयाकरणसूत्रमेव प्रमाणम्। नचास्य सूत्रस्य सूत्रकृता प्रत्याख्यातत्वान्न प्रामाण्यमिति वाच्यम्, प्रत्याख्यातसूत्रस्याप्रामाण्याभावात्। 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इतिभाष्यसिद्धपरिभाषोक्तेः। अन्यथा, भाष्यकारकृतप्रत्याख्यातसूत्राणामप्रामाण्यं स्यात्। तथा च, प्रमाणभूत आचार्यो दर्भपवित्रपाणिश्शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यम्वर्णेनाप्यनर्थकेन भवितुं किम्पुनरियता सूत्रेणेति। 'इको यणचि' इतिसूत्रेपि—

"सामर्थ्ययोगान्नहि किञ्चिदत्र
पश्यामि शास्त्रे यदनर्थकं स्यात्"।

इति च भाष्यं विरुद्ध्येत्। किंच, प्रथमांतविशेष्यकबोधे तिङभिहितो भावः क्रियया समवायन्न गच्छतीति भाष्यमपि प्रमाणम्। एवं 'कृदभिहितो भावो द्रव्यवत्प्रकाशत' इत्यस्यापि भाष्यकारवचनस्य संगतिः स्पष्टैव। न हि ख्यातिक्रियाप्रधानं कृदंते सत्त्वप्रधानमिति वैषम्यं युक्तम्। पचादयः क्रिया भवति, क्रियाः कर्त्र्यो भवन्तीति भूवादिसूत्रस्थभाष्यं तु पचति भवति पश्य मृगो धावतीत्यादावेकवाक्यतापरं, नतु क्रियाप्राधान्यबोधकपरमिति बोध्यम्। न च प्रथमांतविशेष्यकशाब्दबोधे वाक्यभेदप्रसंगस्तमित्यध्याहारे च गौरवमिति वाच्यम्,

'पश्य लक्ष्मण पंपायाम्बकः परमधार्मिकः'

इत्यादाविव वाक्यार्थस्य कर्मत्वाद्वाक्यभेदाभावात् एकवाक्यतायां फलाभावाद्वाक्यभेदेपि न दोषः इति तु न रम्यम्। एकवाक्यताबोधकभाष्यविरोधादध्याहारे गौरवाच्च। नच समानवाक्ये निघाते युष्मदस्मदादेशा वक्तव्या इति निघातरूपफलसत्त्वात्कथं फलाभाव इत्युक्तमिति वाच्यम्, 'तिङतिङ' इति सूत्रे अतिङ् ग्रहणेन तद्भावफलसत्वाभावात्। एवंचैकवाक्यतायां सत्यां त्वत्संबंधिनी पचिक्रियाकर्तृकभवनानुकूलव्यापाराश्रयो देवदत्त इत्यर्थे 'देवदत्तः पचति ते भवति' इतिप्रयोगे समानवाक्यत्वात् युष्मद्ध शब्दस्य समानवाक्ये 'निघातयुष्मदस्मदादेशा वक्तव्या' इति वार्तिकेनादेशो बोध्यः। एवं 'देवदत्ताः पचन्ति भवति' इत्यत्र पचिक्रियातत्कर्तृकभवनानुकूलव्यापाराश्रय इति बोधः। वाक्यस्वरूपं तु—

'तिङ् सुबन्त च यो वाक्यं क्रिया वा कारकान्विता'

इति। अत्र वाशब्दश्चेदर्थे तेनायमर्थः सम्पद्यते। चेद्यदि कारिकान्विता क्रियाबोध्येति शेषः। सुप् च तिङन्तं च सुप्तिङंते सुप् विशिष्टं तिङंतं तेषामेषामेकशेषः। तेन कारकान्वितक्रियाबोधक सुबंत चय तिङन्त चय सुप्तिङंतचयानां त्रयाणामपि वाक्यत्वलाभः। तत्र 'चैत्रेण शयितव्यम् पचति भवति चैत्रः पचति' इत्यादिक्रमेणोदाहरणम्। तेन 'दश दाडिमानि षट् पूपा' इत्यादौ निरर्थकशब्दसमुदाये वाक्यत्वं

नेति बोध्यम् । 'एकतिङ् वाक्यम्' इति वार्तिककारोक्तवाक्यं तु शास्त्रीयं निघातमात्रविषयम् । भाष्यसिद्धवाक्यता तु लौकिकैव गृह्यते । न च 'भावप्रधानमाख्यातं सत्वप्रधानानि नामानि' इति यास्कोक्तवचनं विरुद्धयते' इति वाच्यम्, 'नैकम्प्रयोजनं योगारम्भम्प्रयोजयति' इतिभाष्योक्तिवत् । 'एकस्तन्तुस्त्वक्त्राणेऽसमर्थः तत्समुदायश्च कम्बलस्समर्थः । एकस्तंडुलः क्षुत्प्रतिघातेऽसमर्थः तत्समुदायश्च वर्द्धितकं समर्थम् । एकश्च वल्वलो बंधनेऽसमर्थः तत्समुदायश्च रज्जुस्समर्थो भवति' इतिभाष्योक्तिवदत्राप्युपपत्तेः ।

यद्वा, संख्याकालातिरिक्त आख्यातार्थो हि भावः कर्ता तत्प्रधानमाख्यातमित्यर्थः । 'लः कर्मणि च भावे चाकर्मकेभ्यः' इतिसूत्रस्वरसात् तत्र भावस्य कर्तुः प्राधान्यं संख्याकालयोर्विशेषणत्वम् । यद्वा करोति कर्तृकर्मादिव्यपदेशानिति कारकं क्रियेतिवद्भावयति कर्तृव्यवहारमुत्पादयति इति भावः कर्तेतिभावशब्दस्य व्युत्पन्नत्वात्तत्प्रधानमाख्यातमित्यस्य सूपपादत्वान्न कोपि दोषः । अतएव मीमांसका आख्यातार्थभावनाया एव प्राधान्यं मन्यन्ते । तथा च धात्वर्थनिष्ठप्रकारप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विशेष्यतासम्बन्धेन प्रत्ययपदजन्योपस्थितित्वेन कारणतेतिकार्यकारणभावो निर्वहतीति । अत्रेदमवध्येयम्—यदुक्तं नैयायिकैः परयाकर्तृसंज्ञया कर्मसंज्ञाया वाधान्न द्वितीयेति तन्न युक्तम् । यत्रान्यतरनिष्ठानुयोग्य-

ताया एव फलतावच्छेदकत्वसम्बन्धस्तत्रैव परया कर्तृसंज्ञया कर्मसंज्ञाबाधः। यथा 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रग्रामयोर्मध्ये ग्रामनिष्ठानुयोग्यताया एव फलतावच्छेदकसम्बन्धो न तु चैत्रे। कर्मयोग्यताया अभावात् नहि चैत्रो ग्रामं गच्छतीत्यत्र चैत्रमपि गच्छतीति केषांचिदनुभवः। अतएव णेरणाविति सूत्रे आत्मनः कर्मत्वे प्रतिषेधो वक्तव्य इत्याशंक्य 'शरीरमनोरूपावच्छेदकभेदमादाय द्वावात्मानौ अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत्कर्मकरोति, येन शरीरात्मा सुखदुःखे अनुभवति। शरीरात्मा तत्कर्म करोति, येनान्तरात्मा सुखदुःखे अनुभवति' इत्युक्तम्भाष्ये। अतएवोक्तं च वाक्यप्रदीपे—

आत्मानमात्मना विभ्रदस्तीति व्यपदिश्यते।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः॥इति॥

तेन कर्मणा सकर्मकत्वं न कुतः अन्तर्भावात्—आत्मरूपकर्मणो धात्वर्थेऽन्तर्भूतत्वादित्यर्थः। अतएव फलव्यापारयोराश्रयभेदे धातोस्सकर्मकत्वम्। उक्तं च हरिणा—

फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः॥ इति॥

यथा भूधातोः फलव्यापारयोरेकनिष्ठत्वेऽकर्मकत्वम्। तथा च देवदत्तो भवतीत्यत्र देवदत्ताभिन्नाश्रयनिष्ठभवनानुकूलवर्तमानो व्यापार इति बोधः। ग्रामं गच्छतीत्यादौ फल-

व्यापारयोराश्रयभेदे गमधातोस्सकर्मकत्वम् । अत्र गमनानुकूलव्यापारस्य देवदत्तनिष्ठत्वात् तज्जन्यसंयोगरूपफलस्य ग्रामनिष्ठत्वात् । एतेन 'आत्मानमात्मना वेत्सि' इत्यत्रैकस्यैव संज्ञाप्रयुक्तकार्यद्वयदर्शनात् तन्नेति वदन्तो मीमांसका निष्कासिताः । न चैवं 'चैत्रश्चैत्रं गच्छति' इत्यत्रापि शरीरप्रदेशान्तरावच्छिन्नात्मभेदस्यापि कल्पनायां साधुत्वं दुर्वारमिति वाच्यम्, इष्टापत्तेः । न चैवं 'चैत्रः स्वात्मानं जानाति' इति स्वशब्दानुपपत्तिर्दुर्वारेति वाच्यम्, त्वन्मतेपि तुल्यत्वात् । तथाहि फलशालित्वसमनियतमखण्डोपाधिरूपं कर्मत्वमिति मतम् । तच्चैकस्मिन्विरुद्धमिति स्पष्टतरमेव । शाब्दिकमते फलाश्रयः कर्मेति चैत्रश्चैत्रं गच्छतीत्यत्र परया कर्तृसंज्ञया कर्मसंज्ञाया बाधाच्चैत्रश्चैत्रं गच्छतीति न प्रयोग इति शाब्दिका इत्युक्तं न विस्मरणीयम् । एतेन चैत्रश्चैत्रं गच्छतीति प्रयोगवारणाय भेदोपि द्वितीयार्थः, इति बह्वाकुलं वदन्तो नैयायिका अपि निष्कासिताः ।

ननु 'विहगो विहंगं गच्छति न तु स्वम्' इत्यत्र कस्य निषेधविषयत्वम् ? इतिचेदुच्यते । इत्यत्रान्याश्रयस्यैव निषेधः । आश्रयस्य द्वितीयार्थत्वादुक्तभाष्यात् कर्तुराश्रयस्याभेदान्वयात् । एतेन नतु स्वमिति निर्देशे भेद एव निषिद्ध्यत इति भेदस्यापि द्वितीयार्थत्वात्तस्यैव निषेध इत्यपि प्रवदन्तो नैयायिका निष्कासिताः किञ्च भेदे द्वितीयायाश्शक्तत्वे अनेकशक्तिकल्पनागौरवात् । तस्माद्भेदो न

द्वितीयार्थ इति सिद्धम् । नचैवमस्तु 'घटमहं जानामि घटस्य ज्ञाता' इत्यत्र ज्ञाधातुजन्यज्ञानरूपफलस्य घटादावसत्त्वात्फलव्यापारयोरेकाश्रयनिष्ठत्वात् ज्ञानेच्छादीनामात्मधर्मत्वेनाचेतने अभावाद्ज्ञाधातोरकर्मकत्वात् घटमहं जानामि घटस्य ज्ञाता इत्यादीनामसाधुत्वं स्यादिति दोषः । अस्माकं मते सविषयेकार्थाभिधायिधातुयोगे द्वितीयाषष्ठ्योर्विषयितायां लक्षणा, आख्यातस्य चाश्रयत्वे फलावच्छिन्नव्यापारस्य धातुवाच्यत्वम् । तथा च घटविषयकज्ञानाश्रयश्चैत्र इति बोधः ।

एवं द्वितीयार्थवृत्तित्वस्यैकदेशे फलेऽन्वयांगीकारादेकदेशान्वयलक्षणो न दोषः । 'चैत्रस्य नप्ता' इत्यादाविव तादृशान्वयस्य सत्वादिति वाच्यम् । अज्ञानावरणभंगरूपात् ज्ञाधातोरर्थात् । एवं च घटादेरज्ञानावरणभंगरूपज्ञाधात्वर्थफलाश्रयत्वात् । एवं च व्यापारव्यधिकरणधात्वर्थफलशालित्वं कर्मत्वमिति सिद्धम् । ग्रामं गच्छतीत्यादौ संयोगादिरूपो गमादिधात्वर्थः । तथा च, घटनिष्ठा ज्ञानावरणभंगरूपफलानुकूलदेवदत्ताभिन्नाश्रयनिष्ठवर्तमानो व्यापारः । यच्चोक्तं चैत्रस्य नप्ता इत्यादाविवेति तदपि न, परंपरासम्बन्धस्य षष्ठ्यर्थत्वेनैकदेशान्वयस्य तत्राभावात् । न च संयोगादिरूपस्य फलस्य द्वितीयादेर्वाच्यत्वमस्तु न धातोरिति वाच्यम्, कर्मणि द्वितीयेत्यादिसूत्रस्वरसात् तेषां फलवाचित्वस्याप्रामाणिकत्वात् । यच्चोक्तमप्रथमासामाना-

धिकरणाभावादिति तदपि न, एवमपि द्वितीयाया दुर्वारत्वात्। यच्चोक्तं समुदायस्य प्रातिपदिकत्वाभावान्न द्वितीयेति तदविचारिताभिधानम्। मृगो धावतीति वाक्यस्य धात्वर्थेन सहाभेदसम्बन्धेनान्वयस्य व्युत्पन्नत्वात्।

तथा च, द्वितीयोत्पत्तिर्दुर्वारैव। अन्यथा 'नीलो घटः करोति रमणीय ओदनः पचति' इतिप्रयोगापत्तिस्स्यात्। किंतु नामार्थयोरभेदान्वयस्य व्युत्पन्नत्वम् यथा पचति देवदत्तः पाचकोदेवदत्तः राजपुरुष इत्यादौ। यच्चोक्तमन्तरङ्गजातसंस्कारमित्यादीति तदपि न सत्, मृगपदस्य दृशिक्रियायां कर्मता सम्बन्धेनान्वयादनभिहिताधिकारीयकर्मणि द्वितीयेति सूत्रेण द्वितीयाप्राप्तौ 'कृतभोजनोपि भोजनविशेषात्पुनर्भोजनं करोति, कृतक्षौरोपि शिल्पविशेषात्पुनः क्षौरं कारयति, अमेध्यलिप्तदेहः शुद्धिमिच्छन्पुनः स्नानं करोति' इत्यादिवदत्राप्यन्तरंगजातसंस्कारबाधं कोपि वार्येत्। यच्चोक्तं प्रत्याख्यातसूत्रस्याप्रामाण्याभाव इति तदपि न वाच्यम् सर्वत्र प्रत्याख्यानस्य किमदृष्टार्थमेव तदुच्चारणमुतदृष्टार्थमपि ? इत्येतद्विचारपरत्वात् अन्यथा पारायणे धर्मश्रवणेन भाष्ये प्रत्याख्यानस्यासंगतिस्स्यात्। एवं 'ञमङणनम्' इत्यत्र मकारप्रत्याख्यानपरम्भाष्यं च तत्परमेव। एवमङ्गानामपि पारायणे धर्मोत्पादकत्वम्। अतएवोक्तं वृद्धिसूत्रे 'वर्णेनाप्यनर्थकेन' इति। इकोयणचीति सूत्रेपि सामर्थ्ययोगादित्यादि। अतएव 'सोयमक्षरसमा-

न्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमंडितो ब्रह्मराशिः" इति भाष्ये प्रत्याहाराह्निके उक्तम् । उक्तं च नन्दिकेश्वरकृत-काशिकायाम् :—

नृत्तावसाने नटराजराजो
ननाद ढक्कां नवपंचवारम् ।
उद्धर्तुकामस्सनकादिसिद्धा-
नेतद्विमर्शे शिवसूत्रजालम् ॥

प्रकृतिप्रत्ययार्थयोरिति प्राचीनवैयाकरणसूत्रस्य प्रत्याख्यानं तु नैवम् । अस्य भाष्यविरोधादुपेक्ष्यत्वात्संख्याकालयोर्व्यभिचारात्सूत्रकृता प्रत्याख्याततत्वाच्च । प्रत्याख्यानप्रकारस्त्वित्थम्,—प्रधानं प्रत्ययार्थं इति वचनं न कार्यमर्थस्यान्यप्रमाणत्वादिति भगवान् पाणिनिः । अर्थस्य तथा बोधस्य व्युत्पत्त्यनुसारित्वादित्यर्थः । यत्तु भूवादिसूत्रस्थभाष्यं तिङभिहितो भावः क्रियया समवायं न गच्छतीति-भाष्यमादाय एकवाक्यतापरमेव व्याख्यातं तदप्यबोधात् । तद्भाष्यं तु एकवाक्यतायाः क्रियाप्राधान्यस्य च बोधकमेव । तथाहि कैयटः—नन्वन्यत्रोक्त तिङभिहितो भावः क्रियया समवाये न गच्छति, न हि भवति पचति पठतोति ततश्च तेनैतद्विरुद्ध्यते । अत्राहुः कर्तृकर्मभावेन क्रिया आख्यातवाच्या क्रियया सम्बध्यत एव, भवति पचति पश्य मृगो धावतीति करणभावेन सम्बध्यते तथा प्रयोगादर्शनादिति । अत्र साध्यसाधनभावस्संबंधो न तु सामान्यविशेष-

भाव इत्यपि कैयटः। वाक्यप्रदोपेपि 'मृगो धावति पश्येति साध्यसाधनवर्तिता'। इति। हरिणाप्युक्तम् :—

'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता।
प्रकल्पिता यथाशास्त्रे सघञादिष्वपि क्रमः'॥

आख्यातशब्दे पश्य मृगो धावतीत्यादिर्गृह्यते। एवं च पश्य मृगो धावतीत्यादौ पश्यभागेन साध्यवर्तिता, धावति भागेन साधनवर्तिता। स्वस्यकारकत्वेनानन्वयः स्वस्मिन् कारकाणामन्वय इति पश्येत्यस्यास्सक्रियांतराकांक्षानुत्थापकतावच्छेदकरूपं साध्यत्वम्। स्वस्य कारकत्वेनान्यस्मिन्नन्वय इति कारकान्वयित्वरूपं धावतीत्यस्यास्साधनत्व वोध्यम्। एवं पश्य मृगो धावतीत्यत्र एकमृगाभिन्नाश्रयकर्तृकवर्तमानधावनक्रियाविषयकत्वन्निष्ठदर्शनानुकूलवर्तमानो व्यापार इति बोधः। पचति भवतीत्यत्रापि एकदेवदत्ताभिन्नाश्रयकर्तृकवर्तमानपचिक्रिया भवनानुकूलवर्तमानो व्यापार इति बोधः। यच्चोक्तं 'पश्य लक्ष्मण पंपायां बकः परमधार्मिकः' इत्यादाविव वाक्यभेदाभाव इति तदप्यसत्। तत्रापि वाक्यभेदस्येष्टापत्तौ न कोपि बाधकः। एतेन संख्याकालातिरिक्त आख्यातार्थो हि भाव इत्यादिभावप्रधानमाख्यातं तत्सर्वं शाब्दिकमतानभिज्ञानतस्तदपास्तम्। किम्बहुना, यदा तु नैयायिकैः प्रथमांतविशेष्यकबोधः कथंचित्समर्थितस्तदैवोक्तव्याख्यानमिदानीं तु भाष्यविरोधात्प्रथमान्तमुख्यविशेष्यकस्य हेयत्वात्सर्वं व्याख्यानमसत्।

एवं च, प्रथमान्तविशेष्यकबोधे देवदत्तः पचति ते भवतीत्यादौ त्वत्संबन्धिनी देवदत्तकर्तृका पचिक्रियाभवनानुकूलदेवदत्ताभिन्नाश्रयनिष्ठवर्तमानो व्यापार इति बोधः। नैयायिकमते पचिक्रियानुकूलकृत्याश्रयो देवदत्तः सा च त्वत्संबंधिनी भवति इति समानवाक्यत्वाभावात्समानवाक्ये निघाततयुष्मदस्मदादेशा वक्तव्या इति वार्तिकेन युष्मदस्मद्शब्दयोस्ते मे न भवेताम्। वार्तिकबलेन समानवाक्य एव निघातादेशानां नियमात्। अतएव 'पूर्वं स्नाति ततो व्रजति' इत्यत्र तत इत्यस्मात्परस्य व्रजतीत्यस्य तिङतिङ इति सूत्रेण निघातः। उक्तं च वाक्यप्रदीपे--'सम्बोधनपदं यच्च तत्क्रियाया विशेषणम्' व्रजानि देवदत्तेति निघातोत्र तथा सति' इति। 'आख्यातं सविशेषणम्वाक्यम्' इति समर्थसूत्रे वार्तिककारोक्तेस्सम्बोधनपदस्य क्रियाविशेषणत्वं युक्तम्। एवं तिङतिङिति सूत्रे अतिङिति निषेधादनेकतिङन्तानामेकवाक्यत्वम्। नन्वेवं समर्थसूत्रे एक तिङ् वाक्यमितिवार्तिकादेकतिङन्तस्य वाक्यत्वन्नानेकतिङन्तस्य। हरिणाप्युक्तम् :--

'एकतिङ्यस्य वाक्यं तु शास्त्रे नियतलक्षणम्।
तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न भिद्यते'॥ इति

तथा च, पश्य मृगो धावतीत्यादौ बहुतिङन्तानां वाक्यत्वासत्त्वात्तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् इति विरोधस्स्यात् सूत्रे अतिङ्ग्रहणस्य वैयर्थ्यापत्तिश्च स्या-

दिति चेन्न, एकतिङ् वाक्यमित्यस्य एकतिङन्तार्थविशेष्य-कम्वाक्यमित्यर्थकत्वस्य योग्यत्वात्। तथासत्यनेकतिङन्तानामपि वाक्यत्वं सिद्धम्। 'ब्रूहि ब्रूहि देवदत्त' इतिभाष्यकारोक्तेश्च। ब्रूहि ब्रूहि देवदत्त इत्यत्र वाक्यत्वान्निघातस्सिद्धयतीति कैयटः। अतएव एकतिङित्यत्रैकशब्दस्समानवचनो नतु संख्यावाची बहुब्रीहिश्चायमिति कैयटः। एकशब्दस्य समानार्थत्वं तु 'निपात एकाजनाङ्' इति सूत्रे—

'एकोन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेल्पे संख्यायां च प्रवर्तते'॥

इत्युक्तम्भाष्ये। अतएव, एकतिङित्यस्यैकतिङ् विशेष्यकम्वाक्यमित्यर्थो लभ्यते। एतेन तथा तिङन्तमप्याहुरित्यस्य विरोधापत्तिस्सूत्रेऽतिङ् ग्रहस्य वैयर्थ्यापत्तिश्च वारिता।

अतएव,—

'बहुष्वपि तिङन्तेषु साकांक्षेष्वेकवाक्यता।
तिङातिङोनिघातस्य प्रतिषेधस्तथार्थवान्'॥

इत्युक्तं हरिणा। भाष्यकारेण तु पचति भवतीत्यस्य पाको भवतीत्यर्थ इत्येकवाक्यत्वं स्पष्टमुक्तम्। किं च नैयायिकमते अनेकदेवदत्तकर्तृकपाचक्रियाभवनानुकूलव्यापार इत्यर्थे देवदत्ताः पचन्ति भवतीति प्रयोगे अनेकदेवदत्तकर्तृत्वेन भवति शब्दे बहुवचनापत्तिस्स्यात्। अपि च, तन्मते पाको भवतीत्यर्थे पचति भवति इतिमृगकर्तृकं धावनम्पश्ये-

त्यर्थे पश्य मृगो धावतीति च वाक्यमसाधु स्यात् । तथा च, शब्दसाधुत्वपरव्याकरणस्मृतेर्विरोधात् साधुत्वानुशासनार्थम्प्रवृत्ता भाष्यकारादयो न सहन्ते । ननु व्याकरणं शब्दसाधुत्वमात्रं नत्वर्थविशेषविधायकं समर्थसूत्रे अर्थानादेशनादिति भाष्योक्तेः । 'अथ शब्दानुशासनम्' इत्यस्य भाष्यकारेण स्वमुखेनैव स्पष्टोक्तत्वाच्च । किञ्च, व्याक्रियन्ते व्युत्पाद्यंते शब्दा अनेनेति व्याकरणम्, इत्यर्थान्वर्थसंज्ञयापि व्याकरणस्य शब्दसाधुत्वमात्रपरत्वम् । अतएव—

'साधुत्वज्ञानविषया
सैषा व्याकरणस्मृतिः' ।

इत्युक्तम्वाक्यप्रदीपे । अतएव धात्वर्थानामाधुनिकत्वलाभः । अन्यथा, 'वा गतिगंधनयोः' इत्यादिषु गतिगंधनाद्यर्थस्य नियामकत्वादव्ययस्य वा इत्यस्य भूवादिसूत्रेण धातुसंज्ञाऽभावाद्विकल्पकार्थक वातोति प्रयोगाभावे साधने तव्यादयो विधीयंते इत्यादि भूवादिसूत्रस्थभाष्यम्विरुद्ध्येत् । भाष्ये एतद्व्याख्यानस्यादर्शनात् सत्यम् । अर्थादेशात्तात्पर्यकमपि शिष्टप्रसिद्ध्यविरोधिनमयमुद्दिश्यैव साधुतां गमयतीत्यपि भाष्योक्तिः । एवं च शब्दसाधुत्वमात्रपरं नत्वर्थविशेषविधायकमित्युक्तमसत् । अतएव 'आहिताग्निरपशब्दम्प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्' इत्युक्तम्पस्पशायाम्भाष्ये । अन्यथा अपशब्दानामपि व्याकरणानुगतत्वेन साधुत्वात्ते प्रायश्चित्तीया न स्युः ।

पश्य मृगोधावतीत्यत्रैकवाक्यताया भाष्यसम्मतत्वात्तमित्यध्याहारोपि योग्यः।

एतेन यदुक्तं बोधस्तु असाधुभ्योपि भवतीतिबोधस्य वाक्यभेदेऽपि जायमानत्वात्तद्विरोधो न दोषायेत्यपास्तम्। प्रथमान्तबोधे आख्यातार्थकृति प्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रतीतरा विशेषणीभूतप्रथमांतपदजन्योपस्थितिरिति कार्यकारणभावः। इति कर्त्राख्याते 'चैत्र इव मैत्रो गायति' इत्यादौ इवार्थसादृश्ये चैत्रस्य विशेषणीभूतत्वान्न तत्र संख्यान्वयः। अन्यथा 'चैत्रा इव मैत्रो गायति' इत्यादौ मैत्रे बहुवचनापत्तिरितीतरा विशेषणघटिते गौरवम्। कर्माख्याते तु आख्यातार्थफलं प्रकारकबोधम्प्रति प्रथमान्तपदजन्योपस्थितिरितिकार्यकारणभावान्तरमित्यपि गौरवम्। भावाख्याते 'चैत्र इव मैत्रो युज्यते' इत्यादौ धात्वर्थप्रकारकबोधम्प्रति आख्यातपदजन्यकृत्युपस्थिति हेतुः। तथा च, चैत्रसमवेतकृति जन्यसंयोगजनिकाकृतिरिति बोधः। इति कार्यकारणभावत्रयं गुरुभूतभूतमित्यास्तां तावत्। इति शाब्दबोधप्रक्रियानिरूपणम्।

सोयम्वर्णात्मकश्शब्दो द्विधा। संस्कृतरूपो, भाषारूपश्च। संस्कृत इत्यस्य भाषाशब्देभ्यो विविच्य व्याकरणनिष्पन्नप्रकृतिप्रत्ययादिसमुदायकपुण्यजनकतावच्छेदकत्वेन निर्वृत्त इत्यर्थः। तथा च भाष्यश्रुतिः—

'एकश्शब्दः सम्यक्ज्ञातस्सुप्रयुक्तः
स्स्वर्गे लोके च कामधुक् भवतीति'।

'भाषेत्यस्य संस्कृतरूपभिन्नभाषणम्भाषेत्यर्थः। सा च देशादि भेदेनानेकभेदवती। किं संस्कृतवत् भाषाशब्दोपि प्रयोक्तव्यः किम्वा न ? इत्यत्र निर्णयम्भाष्यात् ज्ञेयम्। भाष्यं च—किं शब्दोपदेशः कर्तव्यः आहो स्विदपशब्दोपदेशः ? आहोस्विदुभयोपदेश इति। अन्यतरोपदेशेन कृतं स्यात्। तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते। 'पंच पंचनखा भक्ष्याः' इत्युक्ते गम्यत एतदतोऽन्ये अभक्ष्या इति। अभक्ष्यप्रतिषेधेन भक्ष्यनियमः। तद्यथा, 'अभक्ष्यो ग्रामकुक्कुटः' 'अभक्ष्यो ग्रामसूकरः'। इत्युक्ते गम्यत एतदतोऽन्य अरण्यो भक्ष्य इति। एवमिहापि यदि तावच्छब्दोपदेशः क्रियते गौरित्येतत् अस्मिन्नुपदिष्टे गम्यत एतद्गाव्यादयोऽपशब्दा इति। अथाप्यपदेशोपदेशः क्रियते। गाव्यादिषूपदिष्टेषु गम्यत एतत् गौरित्येष शब्द इति। किम्पुनरत्रज्यायः ? लघुत्वाच्छब्दोपदेश एव ज्यायान् लघीयान् शब्दोपदेशः। गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य वहवो अपभ्रंशाः। तद्यथा, गौरित्येकस्य शब्दस्य गावी गोणी गोता गोपोतलिका इत्येकमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवतीति इष्टान्वाख्यानमित्यस्य साधुशब्दप्रयोगाद्धर्मावाप्तिः इत्यर्थः। अथवोपादयांपदेशात्साक्षात्प्रतिपत्तिरित्यर्थ इति कैयटः। एवं चासाधुशब्दप्रयोगान्न धर्मावाप्तिरिति फलितम्।

'यस्तु प्रयुंक्ते कुशलो विशेषे,
शब्दान् यथावद्व्यवहारकाले।

सोऽनन्तमाप्नोति जयम्परत्र,
वाग्योगविद्दुष्यति चापशब्दैः' ॥

इत्यादि भाष्यादधर्मोत्पादकत्वान्निषिद्धश्चापशब्दानाम्प्रयोगः । ननु एवं हि श्रूयते यर्वाणस्तर्वाणो नाम ऋषयो वभूवुः प्रत्यक्षधर्माणः परावरज्ञा विदितवेदितव्या अभिगतयाथातथ्यास्ते तत्रभवन्तो 'यद्वानस्तद्वानः' इति प्रयोक्तव्ये 'यर्वाणस्तर्वाणः' इति प्रयुञ्जते । याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितं ततस्ते पराभूता' इति भाष्येण यज्ञ एवापशब्दानाम्प्रयोगो निषिद्धो नान्यत्रेति कथं निषिद्धा इति ब्रूषे ? इतिचेदुच्यते, अप्रबंधात्मकापशब्दानां याज्ञे कर्मणि दोषप्रयोजकत्वात् प्रबंधात्मकानां तु तरां निषिद्धत्वमिति विवेको ज्ञेयः । प्रबंधरूपाणामेवापशब्दानामगनादिना लोके महादोषप्रयोजकत्वदर्शनं, नाप्रबंधरूपाणामिति तेषाम्विशेषत्व लोके दर्शनात् ।

यद्यपि 'यच्च पुनरशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति नाभ्युदयाय' इत्यपि भाष्योक्तं, तथापि भाष्येऽनेकधा दर्शनादपदत्वाच्च न ते प्रयोक्तव्याः । 'अपदं न प्रयुञ्जीत' इति भाष्योक्तेश्च । अपदमित्यस्यापरिनिष्ठितरूपमित्यर्थः । परिनिष्ठितत्वं चोद्देश्यविधेयतावच्छेदकानाक्रान्तत्वम् । एवं च प्रबंधरूपा लोके दोषदर्शनान्नैव प्रयोक्तव्यास्तद्भिन्नेषु तु यथेष्टम्बोध्यम् । 'नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन् भिक्षुके' इति न्यायात् । तस्मात् 'ब्राह्मणेन न

म्लेच्छित वै नापभाषित वै' इत्यादेरपि श्रुतेश्च नापभाषितप्रयोगे ब्राह्मणानामधिकारः । अतएव व्याकरणप्रयोजनाधिकारे 'म्लेच्छा माभूम इत्यध्येयं व्याकरणम्' इत्युक्तम्भाष्ये म्लेच्छित वै इत्यस्यैव विवरणं अपभाषित वै इति । कृत्यार्थे तवैकेन्यत्वन इतिसूत्रेण तु वै प्रत्ययः । अपभाषिवै इत्यस्य नापभाषितव्यम् इत्यर्थः ।

नन्वेवं किं रामादिचरित्रयुक्ता अप्यपभाषित शब्दाः श्रुत्युक्तनिषेधान्नादर्तव्याः ? इतिचेदुच्यते । मोक्षादिफलदातृवाल्मीकादिप्रबंधसत्त्वे तेषामप्यादरणीयत्वाभाव इति । यद्वा, यथा भ्रमराणां यस्य कस्यापि पुष्पेभ्यः पुष्पान्तरं गत्वा तेषां रसादरणे एवाशयो नतु पुष्पादरणे एवम्प्रकृतेपि । लोके सारग्राहिभिः पुरुषैर्भवितव्यम् इतिबोध्यम् । तथाचापभाषितोपदेशे न ज्ञानावाप्तिः किन्तु साधुशब्दोपदेशेनैव । साधुत्वलक्षणं तु शक्तिवादे उक्तम् व्याकरणव्यंग्यशब्दनिष्ठपुण्यजनकतावच्छेदकत्वमिति शाब्दिकाः । नैयायिकास्तु —अर्थविशेषे व्याकरणव्युत्पाद्यत्वं साधुत्वमित्याहुः । मीमांसकास्तु—भाषाऽनावृत्तिमत्त्वमेव साधुत्वमित्याहुः । एवं च, शास्त्रपूर्वकसाधुशब्दप्रयोगद्वारा श्रेयसामवाप्तये व्याकरणाध्ययनस्यावश्यकत्वम् । व्याकरणाध्ययनस्य मोक्षमपि फलम् । तदुक्तम्वाक्यपदीये—

'तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यम्प्रकाशते' ॥

इदमाद्यम्पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः
अत्रातीतविपर्यासः केवलामनुपश्यति ॥इति॥

अस्यार्थः—तत् शरीररोगाणामायुर्वेद इव वाङ्मलानां चिकित्सितं प्रत्यवायसाधकापशब्दरूपाणां वाचां मलानां नाशकव्यापारवदित्यर्थः । यद्वा, अपशब्दोच्चारणोत्पन्नप्रत्यवाय एव मलं तेषां नाशकव्यापारवत् । तदुक्तम् व्याकरणज्ञो हि प्रत्यवायहेतुभूतानपशब्दान् प्रयुंक्ते ज्ञानं हि तस्य शरणमिति । अपवर्गस्य मोक्षस्य द्वारं परंपरया द्वारभूतम् । व्याकरणनिष्पन्न साधु शब्दोच्चारणेन धर्मोत्पत्तिस्तदनन्तरमन्तःकरणशुद्धिः । तदनंतरं ज्ञानोदयो दीप इव प्रकाशते तदनंतरमनर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिरूपो मोक्षः । किम्भूतम् सर्वविद्यानां मंत्रादीनां मध्ये पवित्रं पवित्रतावच्छेदकावच्छिन्नम् । तथाचाप्रमत्तगीतश्लोकः—

'आपः पवित्रं परमं पृथिव्या-
मापाम्पवित्रं परमञ्च मंत्राः ।
तेषां हि सामर्ग्यजुषां पवित्र-
म्महर्षयो व्याकरणानि चाहुः' ॥

इति । पुनः अधिविद्यं सर्वासु विद्यासु उपयोगिभूतम् ।

इदं व्याकरणं सिद्धिर्मोचस्तस्य सोपानपर्वणां पदं निहितं स्थानानाम्मध्ये आद्यं प्रथमम्पदस्थानम् । सेयम्व्याकरण-विद्या मोच्चमाणानां मुमुक्षूणामजिह्मा अवक्रा राजपद्धतिः राजमार्गः । अत्र व्याकरणरूपे अतीतविपर्यासः अतीतो निवृत्तोऽपशब्दरूप विपर्यासो यस्य तथा भूतस्सन् केवलां शुद्धस्वरूपां शब्दब्रह्मापरपर्यायाम्वाचमनुपश्यति साक्षा-त्करोतीत्यर्थः । एवं सिद्धं शास्त्रपूर्वकप्रयोगेधर्म इति । एवं सर्वेषु धर्मकृत्येषु बोध्यम् । ध्वनितं चेदम्भाष्ये भाष्यं च शास्त्र पूर्वक प्रयोगे धर्मस्तत्तुल्यं वेदशब्देनेति । भागवतेपि च :—

'ज्ञात्वा ज्ञात्वा च कर्माणि जनोयमुपतिष्ठति,
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' ।

नन्वेवं, ज्ञात्वा कर्माणि इत्यनेन ज्ञाने धर्म इत्येव निष्पन्नो नतु शास्त्रपूर्वकप्रयोग इतिचेत् उच्यते । विदुष इत्यस्य शास्त्रदृष्टविधिज्ञानवत इत्यर्थः । तस्य शास्त्रदृष्ट विधिपूर्वकं कृतानि यानि कर्माणि तेषां सिद्धिर्नत्वशास्त्रदृष्ट विधिपूर्वकं कृतानाम् । नन्वेवमपि यजमानेन त्वष्ट्रा एवमेव ज्ञात्वा शक्राभिचारकं यज्ञमारब्धं, तत्र 'इन्द्रशत्रुर्वर्द्धस्व' इति मंत्र ऊहितस्तस्य कथं न सिद्धिरभूत् ? इति चेन्न, तत्र शास्त्रपूर्वकप्रयोगाभावात् । मंत्रे आद्युदात्तोच्चारणं वृत्रस्य शत्रुत्वम्प्रत्यशास्त्रपूर्वकमेव, शक्रस्य शत्रुत्वम्प्रति शास्त्र-पूर्वकम् । दक्षयज्ञे तु शिवस्य भागाभावः, दक्षस्य पश्यतस्स-तीदेहत्यागश्च एवाशास्त्रविधिः । तादृशयज्ञे ईश्वरस्य

योग्यभागाभावः कन्यादेहत्यागश्च इत्यशास्त्रदृष्ट विधि-पूर्वकमिति विगुणत्वं तस्य योग्यमेवेति स्थितम्। एवं रावणो युद्धे रामचन्द्राभिचारकं यज्ञमारब्धवान्। तत्रेश्वराभिचार एवाशास्त्रदृष्टविधिपूर्वकः तथा च विगुणत्वं योग्यमेव। एवं सर्वत्र बोध्यम्।

सोऽयं शब्दः पुनश्चतुर्द्धा—जातिशब्दाः गुणशब्दाः क्रियाशब्दाः यदृच्छाशब्दा इति। 'चतुष्टयी शब्दानाम् प्रवृत्तिः' इति भाष्योक्तेः। तत्र जातिशब्दा गवादयः, परमाण्वादिशब्दानामपि जातिशब्दत्वम् तत्र जातेस्सत्वात्। वैशेषिकमतानुसारिणस्तु तत्र गुणशब्द व्यवहार इत्याहुः। गुणशब्दाश्शुक्लादयः। क्रियाशब्दाः पाचकादयः। यदृच्छाशब्दाः डित्थादयः ते एव संज्ञा शब्दा इत्युच्यते। अर्थगतम्प्रवृत्तिनिमित्तमनपेक्ष्य यश्शब्दः प्रयोक्तृ अभिप्रायेणैव प्रवर्तते स यदृच्छाशब्दः। अव्युत्पन्ना यदृच्छाशब्दाः। अर्थवत्सूत्रारंभात् सर्वे शब्दाः व्युत्पन्ना इति पक्षे नार्थोऽर्थवत्सूत्रेणेति चेत् शिष्टप्रयुक्तानामेव अव्युत्पत्तिपक्षोप्यस्तीति ज्ञापनार्थार्थवत्सूत्रारम्भः। अनुकरण शब्दानामव्युत्पन्नत्वात्तदर्थं चेति कैयटः। व्युत्पत्तिपक्षे कृत्तद्धितेत्यनेनैव सिद्धम्। गवित्ययमाह। भूसत्तायामित्यादयोऽनुकरण शब्दाः।

तत्रानुकार्य्यानुकरणयोरभेदविवक्षा, भेद विवक्षा च। यदि अभेदविवक्षा तदानुकार्याणामर्थवत्वाद्यभावात् अर्थवद्धातुरित्याद्यप्रवृत्तौ न पदत्वं न वा प्रातिपदिकत्वम् साधुत्वं त्वस्त्येव। अन्यथा 'अपदं न प्रयुञ्जीत' इतिभाष्योक्तेस्ते-

षाम्प्रयोगाभावादसाधुतापत्तेः । यदि भेदविवक्षा, तदा तेषामर्थवत्त्वादर्थवदधातुरित्यादि । वृत्तौ पदत्वं प्रातिपदिकत्वं चेति । अत्र डित्थादिशब्दे शब्द एवोपाधित्वेनाभिधीयते । डित्थादिशब्दात्तन्नामायमिति प्रतीतेः अयमेवाभिप्रायो भाष्यसम्मतः । अतएव 'अर्थगतम्प्रवृत्तिनिमित्तम्' इत्यादि कैयटः । प्रकाशकारस्तु—डित्थादिशब्दानामंत्यबुद्धिनिर्ग्राह्यसंहृतक्रमस्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति डित्थादिसंज्ञारूपो यदृच्छात्मक इत्याहुः । चंडिदासस्तु—अन्त्यं स्वलक्षणबुद्ध्या निश्शेषतो ग्राह्यं यस्य तज्जातिप्रतीत्यनन्तरं व्यक्तिप्रतीतिरितिक्रमशून्यं च डित्थादीनां शब्दानां स्वरूपं डित्थादिष्वर्थेषूपाधित्वेन पदार्थोपस्थित्यनुकूलतया संकेत्यते । उपाध्यन्तरं तेषां नास्ति किन्तु धार्मिमात्रं ततः प्रतीयत इति वृत्त्यर्थमाह । पक्षद्वयेपि अन्त्येत्यादि व्यर्थम् । सर्वेषामेव शब्दानां स्वज्ञानद्वारार्थज्ञानजनकत्वात् । यथान्धकारे विद्यमानं घटादिकं प्रकाशयन्प्रदीपस्स्वात्मानमपि प्रकाशयति । अतएव :—

'ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा
तथैव सर्वशब्दानामेते पृथगवस्थिते ।
विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाशते ।।

इत्युक्तम्वाक्यपदीये । वार्तिककारस्तु जातिशब्दे यदृच्छाशब्दमन्तर्भाव्य त्रयी च शब्दानाम्प्रवृत्तिः, न सन्ति यदृच्छाशब्दाः इति त्रिविधानेव शब्दानाह । अतएव 'द्वयक्षरं

चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्'। इत्युक्तम्भाष्ये। सोयं शब्दोऽर्थवदधातुरित्यादि विध्यवकाशः पदत्वम्प्राप्तस्सन् पुनश्चतुर्द्धा। रूढं यौगिकं यौगिकरूढं योगरूढं चेति। पदत्वं तु प्रवृत्तिनिमित्तं त्वतलादि विषयं जातिः। सैवानादि निधनरूपा नित्या तथा व्यवस्थिता सर्वशब्दैरभिधीयत इति। एवंरूपा सैव सर्वधातुभिश्चाभिधीयते सैव सत्तेत्यभिधीयते। तदुक्तम् वाक्यपदीये :—

'सम्बंधिभेदात्सत्तैव भिद्यमाना गवादिषु
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।
प्राप्तः क्रमविशेषेपि क्रिया सैवाभिधीयते
क्रमरूपस्य संहारे सा सत्त्वमिति कथ्यते।
ताम्प्रातिपदिकार्थश्च धात्वर्थश्च प्रचक्षते
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः'

पदं च सुप्तिङन्तम्। 'सुप्तिङन्तम् पदम्' इति सूत्रात्। तत्र अवयवशक्त्यार्थनिरपेक्षत्वे समुदायशक्त्युपस्थिति बोधविषयत्वं रूढिपदत्वम् यथा मणिनूपुराद्युदाहरणम्। समुदायशक्त्यभावे अवयवार्थोपस्थितिबोधविषयत्वं यौगिकपदत्वम् यथा पाचकादि पदम्। अवयवार्थसापेक्षत्वे सति समुदायशक्त्युपस्थितिबोधविषयत्वं योगरूढपदत्वम् यथा गौर्धेनुः पंकजादिपदम्। अवयवसमुदायशक्त्यार्थोपस्थितिबोधे स्वातंत्र्येणोपस्थितिबोधविषयत्वं यौगिकरूढपदत्वम्

यथोद्भिदादिपदम् । यौगिकं खनित्रे रूढं यागे दीक्षितारूढे-रुदाहरणं गौरितीत्याहुस्तन्न, तत्रापि गच्छतीति गौरिति व्युत्पत्तिसम्भवेन केवलरूढत्वाभावात् । गमनकर्तृत्व विशिष्टे गोत्वे शक्तिम्वक्तुं शक्यत्वात् । यौगीकरूढभेदोपि न युक्तः भेदस्वीकारे मानाभावादिति नव्याः । नैतन्मन्मनसि सम्यक् भाति । वयं तु ब्रूमः, यत्रावयवार्थ शक्तिनैरपेक्षेण समुदायशक्तिमात्रेण बोधस्तद्रूढं नत्ववयवार्थ शक्त्यसम्भवेनेति ब्रुवन्ति । बोधस्तु समुदायशक्तिमात्रेणैव, सचावयवार्थशक्तिनिरपेक्षकः । गच्छतीति गौरित्यत्र अवयवार्थशक्तिसम्भवोस्ति, तथापि समुदायशक्तिमात्रेणैव बोध इत्येवं विधस्यापि रूढिपदत्वम् । यत्रावयवार्थ शक्त्यसंभवस्तदपि रूढिपदम् एवंविधस्य रुढिपदत्वाभावे प्रमाणाभावात् ।

यत्र यौगीकरूढार्थयोस्स्वातंत्र्येण बोधस्तद्यौगीकरूढम् । एकत्रार्थे यौगिकत्वेन बोध एकत्र रूढ्या, नत्वेकत्रैव यौगीकरूढत्वेन बोध इत्यर्थः । प्रमाणं तु प्राचीनानां व्यवहार एव । एतेन रूढिलक्षणायाः कर्मणि कुशल इत्युदाहरणमसंगतमित्यपि प्रत्युक्तम् । यत्रैकत्रार्थे एव योगरूढत्वेन बोधस्तदेव योगरूढम् । कुशलादीनां तु कुशले रूढत्वं कुशादानकर्तरि यौगिकत्वम् । भिन्न शक्तिरपि भेदस्वीकारे प्रमाणमत्रध्येयम् । कुशलादीनि रूढान्येव किम्वा यौगिकान्येव ? नाद्यः यौगिकत्वस्यापि सम्भवात् । नांत्यः रूढत्वस्यापि सम्भवात् । युक्तं तु कुशलादिषु रूढान्येव कुशादानकर्तृषु यौगिकान्येवेति तत्तदर्थे पृथक् शक्तिग्रहणात् । एवं विनिगमनाभावात्

यौगिकरूढमेव बोध्यम्। द्विरेफपदस्य भ्रमरे लक्षणा इति-तार्किकवेदान्तिनः तदपास्तम् द्विरेफपदस्य भ्रमरे रूढत्वात् कोशे भ्रमरपर्यायेषूपादानात्। नहि कोशे लाक्षणिकोपादानं पर्यायेष्वस्तीति नव्याः। तत्रायम्विचारः—

नैयायिकवेदान्तिभिर्लक्षितलक्षणाया दिङ्मात्रमेव प्रदर्शितम् नतु सिद्धान्तमुक्तम्। भूषणे स्फुटत्यर्थो यस्मादिति स्फोटो वाचक इति यावत्। इति केवलं यौगिकः स्फोटशब्द उक्तस्तन्न सम्यक् साधुशब्दानामिवासाधुशब्दानामपि शक्तिसत्त्वेन वाचकत्वाविशेषात् स्फोटत्वापत्तेः। न चेष्टापत्तिः, शाब्दिकैस्तथानङ्गीकारात् लाक्षणिकव्यंजनयोरसंग्रहापत्तेरिति नव्याः। वयं तु ब्रूमः—भूषणकारोक्तस्यायमभिप्रायः, स्फुटत्यर्थो यस्मादिति स्फोट इति स्फोटशब्दस्य व्युत्पत्तिरेव। ननु स्फोटशब्दस्य यौगीकत्वे साधुशब्दानामिवासाधुशब्दानामपि शक्तिसत्वेन वाचकत्वा विशेषात्स्फोटत्वापत्तिः लाक्षणिकव्यंजनयोरसंग्रहापत्तिश्च स्यादित्याशंक्याह वाचक इति। यौगिकरूढ इत्यर्थः यौगिकरूढयोर्वाचकत्वाविशेषात्।

नन्वेवम्वाचक इत्यनेनैव पदेन यौगिकरूढार्थयोस्सम्पन्नत्वात् स्फुटत्यर्थो यस्मादिति स्फोट इति व्यर्थमित्याशंक्याह यावदिति। वाचक इत्येव सिद्धान्तितं, स्फुटत्यर्थो यस्मादिति तु स्फोटशब्दस्य निष्पत्त्यर्थं व्युत्पत्तिमात्रमेव प्रदर्शितमिति भावः। यद्वा, अनाद्यन्तस्य स्फोटरूपस्य

ब्रह्मणस्सन्मात्रविषयत्वात् स्फोटस्य सर्वत्रैवांगीकारः । तदुक्तं कैयटेन–'असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्द वाच्यम्' इति । 'ब्रह्मतत्त्वमेव शब्दस्वरूपतया प्रतिभाति' इति च । नहि शब्द इत्यनेन साधुशब्दा एव गृह्यन्ते किंत्वपशब्दा अपि ? शब्द शब्देन साधुशब्दे एव शब्दत्वव्यवहार इत्यत्र प्रमाणाभावात् । 'अथ शब्दानुशासनम् केषां शब्दानां लौकिकानां वैदिकानां च' इत्युपक्रम्य, 'किं शब्दोपदेशः कर्तव्यः आहोस्विदपशब्दोपदेशः ? लघीयान् शब्दोपदेशः गरीयानपशब्दोपदेशः' इति भाष्यवार्तिकोक्तेः । अपभाषितशब्दानामेव लौकिकत्व मिति कैयटोपि, एवम साधुशब्दे स्फोटस्य सत्वेपि साधुशब्दे एव शाब्दिकानां व्यवहारः ॥

रामाय साक्षात्परमात्मनेऽस्य,
कृतावताराय शुभाकराय ।
कृतेऽस्तु सत्संस्कृतशब्दवादो,
दुःप्राप्यमाणाय भवाग्रहाय ॥

आश्विने मासि शुक्ले च पूर्णिमायां तथा दिने ।
चन्द्रे पूर्णः कृतो ग्रंथस्सर्वरीवत्सरे शुभे ॥
अङ्काष्टाष्टमृगाङ्केऽब्दे पूर्णो ग्रंथः कृतो मया ।
रामदीनेन शुक्लेन बक्रग्रामनिवासिना ॥

इतिश्रीमद्रामदीनशुक्लविरचितः संस्कृतशब्दवादः समाप्तः ।
संवत् १८८६ शाके १७५१ ।

